शार्ङ्गका ऊचुः — न त्वं मिथ्योपचारेण मोक्षयेथा भयाद्धि नः ।
समाकुलेषु ज्ञानेषु न बुद्धिकृतमेव तत् ॥ १२ ॥
न चोपकृतमस्माभिर्न चास्मान्वेत्थ ये वयम् ।
पीड्यमाना बिभर्ष्यस्मान्का सती के वयं तव ॥ १३ ॥
तरुणी दर्शनीयाऽसि समर्था भर्तुरेषणे ।
अनुगच्छ पतिं मातः पुत्रानाप्स्यसि शोभनान् ॥ १४ ॥
वयमग्निं समाविश्य लोकानाप्स्याम शोभनान् ।
अथास्मान्न दहेदग्निरायास्त्वं पुनरेव नः ॥ १५ ॥

वैशम्पायन उवाच — एवमुक्ता ततः शार्ङ्गी पुत्रानुत्सृज्य खाण्डवे ।
जगाम त्वरिता देशं क्षेममग्नेरनाश्रयम् ॥ १६ ॥
ततस्तीक्ष्णार्चिरभ्यागात्त्वरितो हव्यवाहनः ।
यत्र शार्ङ्गा बभूवुस्ते मन्दपालस्य पुत्रकाः ॥ १७ ॥
ततस्ते ज्वलितं दृष्ट्वा ज्वलनं ते विहङ्गमाः ।
जरितारिस्ततो वाचं श्रावयामास पावकम् ॥ १८ ॥ [८८३०]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यामादिपर्वणि [illegible]
शार्ङ्गकोपाख्याने [illegible] ॥ २३२ ॥

जरितारिरुवाच— पुरतः कृच्छ्रकालस्य धीमाञ्जागर्ति पूरुषः ।
स कृच्छ्रकालं संप्राप्य व्यथां नैवैति कर्हिचित्॥१॥
यस्तु कृच्छ्रमनुप्राप्तं विचेता नाऽवबुध्यते ।
स कृच्छ्रकाले व्यथितो न श्रेयो विन्दते महत् ॥२॥
सारिसृक्व उवाच—धीरस्त्वमसि मेधावी प्राणकृच्छ्रमिदं च नः ।
प्राज्ञः शूरो बहूनां हि भवत्येको न संशयः ॥ ३ ॥
स्तम्बमित्र उवाच—ज्येष्ठस्त्राता भवति वै ज्येष्ठो मुञ्चति कृच्छ्रतः ।
ज्येष्ठश्चेन्न प्रजानाति कनीयान्किं करिष्यति ॥ ४ ॥
द्रोण उवाच— हिरण्यरेतास्त्वरितो ज्वलन्नायाति नः क्षयम्।
सप्तजिह्वाननः क्रूरो लेलिहानो विसर्पति ॥ ५ ॥
वैशम्पायन उवाच—एवं संभाष्य तेऽन्योन्यं मन्दपालस्य पुत्रकाः ।
तुष्टुवुः प्रयता भूत्वा यथाग्निं शृणु पार्थिव ॥ ६ ॥
जरितारिरुवाच — आत्माऽसि वायोर्ज्वलन शरीरमसि वीरुधाम् ।
योनिरापश्च ते शुक्र योनिस्त्वमसि चाऽम्भसः॥७॥

आदिपर्वमें दोसौ चौतीस अध्याय।

जरितारि बोला, कि ज्ञानी जन मृत्यु कालके पहिलेसे जागते रहते है, उनको कभी मृत्यु की पीडा सहनी नहीं पडती। चित्त चेतन जन मृत्यु काल आजाने पर सोते हुएके समान रहता है, उसको मृत्यु की पीडा भोगनी पडती है, और वह मोक्षको नहीं पा सकता। ( १-२ )

सारिसृक्व बोला हमारा यह प्राणका दुःख आ गया है तुम धीर और बुद्धिमान हो, तुम्ही हमारी रक्षा करो; क्योंकि बहुतेरोंमेंसे एकही पुरुष बुद्धिमान और शूर होता है। ( ३ )

स्तम्बमित्र बोला ज्येष्ठ भ्राता कनिष्ठोंके त्राता होते है, सो ज्येष्ठ भ्राताही विपतमें बचाते है। जो ज्येष्ठ भाई न बचावे, तो कनिष्ठ क्या कर सकता है? ( ४ )

द्रोण बोला, कि वह कुटिल कर्मवाला सुवर्णरेता सात जीभ सात मुह सहित वेगसे जलाता लहलहाता हमारे खोते पर आरहा है। ( ५ )

श्रीवैशम्पायनजी बोले, कि हे पृथ्वीनाथ! मन्दपालके पुत्रोंने ऐसा कह सुनकर जिस प्रकार अग्निका स्तव किया था, वह कहता हूं सुनो। जरितारि बोला, कि हे जलानेवाले! तुम वायुकी आत्मा हो, तुम लताओं की देह हो। हे शुक्र! तुम्हारे उपजनेका स्थान जल है और तुम जलके उपजानेका स्थान

ऊर्ध्वं चाऽधश्च सर्पन्ति पृष्ठतः पार्श्वतस्तथा ।
अर्चिषस्ते महावीर्य रश्मयः सवितुर्यथा ॥ ८ ॥

सारिसृक्क उवाच—माता प्रणष्टा पितरं न विद्मः पक्षा जाता नैव नो धूमकेतो ।
न नस्त्राता विद्यते वै त्वदन्यस्तस्मादस्मान्पाहि बालांस्त्वमग्ने ॥ ९ ॥

यदग्ने ते शिवं रूपं ये च ते सप्त हेतयः ।
तेन नः परिपाहि त्वमार्तान्नः शरणैषिणः ॥ १० ॥

त्वमेवैकस्तपसे जातवेदो नाऽन्यस्तप्ता विद्यते गोषु देव ।
ऋषीनस्मान्बालकान्पालयस्व परेणाऽस्मान्प्रैहि वै हव्यवाह ॥ ११ ॥

स्तम्बमित्र उवाच—सर्वमग्ने त्वमेवैकस्त्वयि सर्वमिदं जगत् ।
त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च ॥ १२ ॥

त्वमग्निर्हव्यवाहस्त्वं त्वमेव परमं हविः ।
मनीषिणस्त्वां जानन्ति बहुधा चैकधापि च ॥ १३ ॥

सृष्ट्वा लोकांस्त्रीनिमान्हव्यवाह काले प्राप्ते पचसि पुनः समिद्धः ।
त्वं सर्वस्य भुवनस्य प्रसूतिस्त्वमेवाग्ने भवसि पुनः प्रतिष्ठा ॥ १४ ॥

द्रोण उवाच— त्वमन्नं प्राणिभिर्भुक्तमन्तर्भूतो जगत्पते ।
नित्यप्रवृद्धः पचसि त्वयि सर्वं प्रतिष्ठितम् ॥ १५ ॥
सूर्यो भूत्वा रश्मिभिर्जातवेदो भूमेरम्भो भूमिजातान्रसांश्च ।
विश्वानादाय पुनरुत्सृज्य काले वृष्ट्या सृष्ट्या भावयसीह शुक्र ॥ १६ ॥
त्वत्त एताः पुनः शुक्र वीरुधो हरितच्छदाः ।
जायन्ते पुष्करिण्यश्च सुभद्रश्च महोदधिः ॥ १७ ॥
इदं वै सद्म तिग्मांशो वरुणस्य परायणम् ।
शिवस्त्राता भवाऽस्माकं माऽस्मानद्य विनाशय ॥ १८ ॥
पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्मन्हुताशन ।
परेण प्रेहि मुञ्चाऽस्मान्सागरस्य गृहानिव ॥ १९ ॥
वैशम्पायन उवाच—एवमुक्तो जातवेदा द्रोणेन ब्रह्मवादिना ।
द्रोणमाह प्रतीतात्मा मन्दपालप्रतिज्ञया ॥ २० ॥
अग्निरुवाच— ऋषिर्द्रोणस्त्वमसि वै ब्रह्मैतद्व्याहृतं त्वया ।
ईप्सितं ते करिष्यामि न च ते विद्यते भयम् ॥ २१ ॥
मन्दपालेन वै यूयं मम पूर्वं निवेदिताः ।
वर्जयेः पुत्रकान्मह्यं दहन्दावमिति स्म ह ॥ २२ ॥

उत्पत्ति-स्थान हो और प्रलय स्थानभी तुम्हीं हो। ( १२–१४ )

द्रोण बोला, कि हे जगत्पते ! तुम जीवोंके भीतर रहके खाकर उन का खाया हुआ अन्न नित्य नित्य पचाते हो; सो सब भूत तुम्हारी ही शरणमें रहते हैं। हे शुक्र ! हे जातवेद ! तुम सूर्य स्वरूप बनके किरणसे भूमिमें उपजा हुआ सब रस और धरतीमें स्थित जल ले, समय समय पर फिर उसे वृष्टि द्वारा छोडकर सब अनाज उपजाते हो। हे शुक्र ! तुम्हींसे यह सब पत्तोंवाली लता, सरोवर और महाजलनिधान समुद्र उपज रहे हैं। हे कडे किरणधारिन् ! हमारी यह देह रसनेन्द्रिय के नाथ जलपति वरुण पर निर्भर है, अतएव तुम जब इस जलके विधाता हो, सो हमारे कल्याणकारी हो; ऐसी दशामें हमको बचानाही तुमको उचित है, तुम हमको नष्ट मत करो। हे पिङ्गलनेत्र ! हे लालग्रीव ! हे कृष्णवर्त्मन ! हे हुताशन ! तुम हमसे दूर रहो, सागरके पास बसे घरके समान हमें छोडो। १५–१९

श्रीवैशम्पायनजी बोले, आगे जातवेदा अग्नि द्रोणकी यह बात सुन प्रसन्न हुए, और मन्दपालसे जो कुछ सुना था, वह स्मरण कर बोले, हे द्रोण ! तुम

तस्य तद्वचनं द्रोण त्वया यच्चेह भाषितम् ।
उभयं मे गरीयस्तु ब्रूहि किं करवाणि ते ॥ २३ ॥
भृशं प्रीतोऽस्मि भद्रं ते ब्रह्मन्स्तोत्रेण सत्तम ॥ २४ ॥

द्रोण उवाच — इमे मार्जारकाः शुक्र नित्यमुद्वेजयन्ति नः ।
एतान्कुरुष्व दग्धांस्त्वं हुताशन सबान्धवान् ॥ २५ ॥
तथा तत्कृतवान्वह्निरभ्यनुज्ञाय शार्ङ्गकान् ।
ददाह खाण्डवं दावं समिद्धो जनमेजय ॥ २६ ॥ [८६५८]

इति श्रीमहाभारते खाण्डवदाहपर्वणि शार्ङ्गकोपाख्याने चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥

वैशंपायन उवाच- मन्दपालोऽपि कौरव्य चिन्तयामास पुत्रकान् ।
उक्त्वाऽपि च स तिग्मांशुं नैव शर्माधिगच्छति ॥ १ ॥
स तप्यमानः पुत्रार्थे लपितामिदमब्रवीत् ।
कथं न्वशक्ताः शरणे लपिते मम पुत्रकाः ॥ २ ॥
वर्धमाने हुतवहे वाते शीघ्रं प्रवायति ।
असमर्था विमोक्षाय भविष्यन्ति ममात्मजाः ॥ ३ ॥

कथमन्त्यशक्ता त्राणाय माता तेषां तपस्विनी।
भविष्यति हि शोकार्ता पुत्रत्राणमपश्यती ॥ ४ ॥
कथमुड्डयनेऽशक्तान्पतने च ममात्मजान।
सन्तप्यमाना बहुधा वाशमाना प्रधावती ॥ ५ ॥
जरितारिः कथं पुत्रः सारिसृक्कः कथं च मे।
स्तम्बमित्रः कथं द्रोणः कथं सा च तपस्विनी॥६॥
लालप्यमानं तमृषिं मन्दपाल यथा वने।
लपिता प्रत्युवाचेदं सासूयमिव भारत ॥ ७ ॥
न ते पुत्रेष्ववेक्षाऽस्ति यानृषीनुक्तवानसि।
तेजस्विनो वीर्यवन्तो न तेषां ज्वलनाद्भयम् ॥ ८ ॥
त्वयाऽग्नौ ते परीताश्च स्वयं हि मम संनिधौ।
प्रतिश्रुतं तथा चेति ज्वलनेन महात्मना ॥ ९ ॥
लोकपालो न तां वाचमुक्त्वा मिथ्या करिष्यति।
समर्थं बन्धुकृत्ये न तेन ते स्वस्थ मानसम् ॥१० ॥
तामेव तु ममाऽमित्रां चिन्तयन्परितप्यसे।
ध्रुवं मयि न ते स्नेहो यथा तस्यां पुराऽभवत् ११॥

क्योंकर उन बच्चोंको बचा सकेगी? वह तपस्विनी पुत्रोंको बचानेका उपाय न देखकर शोकमें विकल होगी। क्योंकर ऊपर उडने में असमर्थ मेरे बच्चोंको लेके हृदयमें दुःख पाय बहुत रोती पीटती दौडेगी! हा! बेटा जरितारि क्योंकर जियेगा? सारिसृक्क क्योंकर प्राण बचावेगा? स्तम्बमित्र क्योंकर बचेगा? द्रोण क्योंकर रक्षा पावेगा? मेरी वह तपस्विनी स्त्री क्योंकर जी सकेगी? ४-६

हे भारत! महर्षि मन्दपाल वनमें इस प्रकार विलप रहे थे. वह देखकर लपिता ईर्षासे उनसे कहने लगी. कि तुमने जिन पुत्रोंकी बात कही, उनके लिये मत सोचो, वे तेजस्वी और वीर्यवन्त हैं, अग्निसे उनको भय नहीं है, और तुमने स्वयं उन पुत्रोंकी रक्षाके लिये अग्निसे कहा था। महात्मा हुताशननेभी तथास्तु कहकर उस बातको मान लिया था। वह लोकपाल होकर कभी कही बातकी विरुद्धता नहीं करेंगे, इस लिये इस विषय में तुम्हारा चित्त स्वस्थ है. वास्तवमें तुम्हारा मन बन्धुके कार्यका विरोधी है: तुम मेरी शत्रु जरिताहीको स्मरण कर व्याकुल होरहे हो। पहिले जरिता पर तुम्हारा जैसा स्नेह था, अब मुझ पर वैसा

न हि पक्षवता न्याय्यं निःस्नेहेन सुहृज्जने ।
पीड्यमान उपस्रष्टुं शक्तेनाऽऽत्मा कथंचन ॥ १२ ॥
गच्छ त्वं जरितामेव यदर्थं परितप्यसे ।
चरिष्यस्यसहायैका यथा कुपुरुषाश्रिता ॥ १३ ॥
मन्दपाल उवाच— नाहमेवं चरे लोके यथा त्वमभिमन्यसे ।
अपत्यहेतोर्विचरे तच्च कृच्छ्रगतं मम ॥ १४ ॥
भूतं हित्वा च भाव्यर्थे योऽवलम्बेत मन्दधीः ।
अवमन्येत तं लोको यथेच्छसि तथा कुरु ॥ १५ ॥
एष हि प्रज्वलन्नग्निर्लेलिहानो महीरुहान् ।
आविग्ने हृदि संतापं जनयत्यशिवं मम ॥ १६ ॥
वैशम्पायन उवाच—तस्माद्देशादतिक्रान्ते ज्वलने जरिता पुनः ।
जगाम पुत्रकानेव जरिता पुत्रगृद्धिनी ॥ १७ ॥
सा तान्कुशलिनः सर्वान्निर्मुक्ताञ्जातवेदसः ।
रोरूयमाणान्ददृशे वने पुत्रान्निरामयान् ॥ १८ ॥
अश्रूणि मुमुचे तेषां दर्शनात्सा पुनः पुनः ।

एकैकशश्च तान्सर्वान्क्रोशमानाऽन्वपद्यत ॥ १९ ॥
ततोऽभ्यगच्छत्सहसा मन्दपालोऽपि भारत ।
अथ ते सर्व एवैनं नाभ्यनन्दन्त ते सुताः ॥२० ॥
लालप्यमानमेकैकं जरितां च पुनः पुनः ।
न चैवोचुस्तदा किंचित्तमृषिं साध्वसाधु वा ॥२१॥

मन्दपाल उवाच— ज्येष्ठः सुतस्ते कतमः कतमस्तस्य चानुजः ।
मध्यमः कतमश्चैव कनीयान्कतमश्च ते ॥ २२ ॥
एवं ब्रुवन्तं दुःखार्तं किं मां न प्रतिभाषसे ।
कृतवानपि हि त्यागं नैव शान्तिमितो लभे ॥२३॥

जरितोवाच— किं नु ज्येष्ठेन ते कार्यं किमनन्तरजेन ते ।
किं वा मध्यमजातेन किं कनिष्ठेन वा पुनः ॥२४॥
यां त्वं मां सर्वतो हीनामुत्सृज्यासि गतः पुरा ।
तामेव लपितां गच्छ तरुणीं चारुहासिनीम् ॥२५॥

मन्दपाल उवाच— न स्त्रीणां विद्यते किंचिदमुत्र पुरुषान्तरात् ।
सापत्नकमृते लोके नान्यदर्थविनाशनम् ॥ २६ ॥
वैराग्निदीपनं चैव भृशमुद्वेगकारि च ।

चिल्लाते देखकर धीरे धीरे सबको निकट जाके गले लगाया। (१४-१९)

हे भारत! इस अवसर में महर्षि मन्दपाल एकायक वहां पहुंचे. उनके पुत्रोंने उनको देखकर आनन्द प्रकाश नहीं किया। वह ऋषि हर पुत्र और जरितासे बार बार सम्भाषण करने लगे, पर उन्होंने भला बुरा कुछभी उत्तर नहीं दिया। आगे मन्दपाल जरिताका नाम लेकर बोले, कौन तुम्हारा बडा बेटा कौन मझला, कौन तीसरा और कौन छोटा है। मैं दुःखित होकर बार बार तुमसे यह पूछता हूं, तुम क्यों प्रतिउत्तर वा सम्भाषण नहीं करती हो। मैं तुम्हें छोडके यहांसे चले जा करके शांति पा नहीं सका। (२०-२३)

जरिता बोली, तुमको बडे बेटे, मझले, तीसरे बेटे वा छोटे बेटेसे क्या प्रयोजन है? पहिले तुमने मुझको हर बातमें निकृष्ट देखा था; जिसके पास गये थे, अब उस मधुरहासिनी युवती लपिताही के पास जाओ। मन्दपाल बोले, नारिओंके लिये सौत वा दूसरे पुरुषके बिना इस लोकमें अधिक शोचनीय वैरकी आग जलानेवाला और परलोकमें पुरुषार्थ नष्टकारी और कुछ दीख नहीं पडता।

अग्निना च तथेत्येवं प्रतिज्ञातं महात्मना ॥ १ ॥
अग्नेर्वचनमादाय मातुर्धर्मज्ञतां च वः ।
भवतां च परं वीर्यं पूर्वं नाऽहमिहाऽऽगतः ॥ २ ॥
न संतापो हि वः कार्यः पुत्रका हृदि मां प्रति ।
ऋषीन्वेद हुताशोऽपि ब्रह्म तद्विदितं च वः ॥ ३ ॥
वैशम्पायन उवाच—एवमाश्वासितान्पुत्रान्भार्यामादाय स द्विजः ।
मन्दपालस्ततो देशादन्यं देशं जगाम ह ॥ ४ ॥
भगवानपि तिग्मांशुः समिद्धः खाण्डवं गतः ।
ददाह सह कृष्णाभ्यां जनयञ्जगतो हितम् ॥ ५ ॥
वसामेदोवहाः कुल्यास्तत्र पीत्वा च पावकः ।
जगाम परमां तृप्तिं दर्शयामास चाऽर्जुनम् ॥ ६ ॥
ततोऽन्तरिक्षाद्भगवानवतीर्य पुरंदरः ।
मरुद्गणैर्वृतः पार्थं केशवं चेदमब्रवीत् ॥ ७ ॥
कृतं युवाभ्यां कर्मेदममरैरपि दुष्करम् ।
वरं वृणीतं तुष्टोऽस्मि दुर्लभं पुरुषेष्विह ॥ ८ ॥
वैशम्पायन उवाच—पार्थस्तु वरयामास शक्रादस्त्राणि सर्वशः ।
प्रदातुं तच्च शक्रस्तु कालं चक्रे महाद्युतिः ॥ ९ ॥

---

अग्निको जताया थाः उस पर उन्होंने तथास्तु करके मान लिया था। ( १ )

मैं उन अग्निकी बात, तुम्हारे माताकी धर्मनिष्ठा और तुम्हारे वीर्यको स्मरण कर पहिले यहां नहीं आया था। हे बेटो! तुम वेदमें प्रसिद्ध ऋषि हो; अग्निभी तुमको जानते हैं। श्रीवैशम्पायनजी बोले, कि अनन्तर ऋषि मन्दपाल पुत्रोंको समझाय बुझाय पत्नीको साथ लेके वहांसे दूसरी ठौर गये। ( २-४ )

भगवान अग्निने इस प्रकार श्रीकृष्ण और अर्जुनकी सहायतासे जगतके हितके निमित्त खाण्डव वनको जलाया। उस स्थानमें मेद और वसाकी नदी सोख कर परम परितृप्त होके अर्जुनके सामने प्रगट हुए। अनन्तर भगवान इन्द्र देवोंसे घेरे जाय आकाशमण्डलसे उतरकर अर्जुन और केशवसे बोले, कि जो कर्म देवतालोग भी सहजमें निपटा नहीं सकते, तुमने उसे पूरा किया है, अब मैं तुम पर प्रसन्न हूं, तुम वर मांगो, यद्यपि पुरुषके लिये वह दुर्लभ हो, तौभी तुमको दूंगा। ( ५-८ )

वैशम्पायन बोले, अनन्तर पार्थने इन्द्रजीसे सब अस्त्र मांगे। अति द्युति-

अर्जुनो वासुदेवश्च दानवश्च मयस्तथा ॥ १८ ॥
परिक्रम्य ततः सर्वे त्रयोऽपि भरतर्षभ ।
रमणीये नदीकूले सहिताः समुपाविशन् ॥ १९ ॥ [८७०९]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यामादिपर्वणि खाण्डवदाहपर्वणि

वरप्रदाने षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥

समाप्तमिदं खाण्डवदाहपर्व ॥ समाप्तं चादिपर्व ॥

——ऽऽ——

अतः परं सभापर्व भविष्यति ॥ तस्यायमाद्यः श्लोकः ॥

वैशम्पायन उवाच--ततोऽब्रवीन्मयः पार्थं वासुदेवस्य संनिधौ ।
प्राञ्जलिः श्लक्ष्णया वाचा पूजयित्वा पुनः पुनः ॥ १ ॥

सकोगे। ( १३--१७ )

हे भरतश्रेष्ठ ! महात्मा पावक उनको ऐसी आज्ञा देने पर अर्जुन वासुदेव और मयदानव यह तीन एकत्र होकर कुछ काल घूम फिरकर सुन्दर नदी तटमे जा बैठे। ( १८--१९ ) [ ८७०९ ]

आदिपर्वमें दोसौ छत्तीस अध्याय और खाण्डवदाह पर्व समाप्त।

## आदिपर्व समाप्त।

—×—



आदिपर्व समाप्त ।

श्री महर्षि व्यास प्रणीत

# महाभारत।

## सभापर्व।

( भाषा-भाष्य-समेत। )

भाषांतरकर्ता और प्रकाशक
श्रीपाद दामोदर सातवळेकर
स्वाध्यायमंडल औंध। [illegible]

( [illegible] )

[illegible]

[illegible]

# मंत्री-प्रशंसा।

एकोऽप्यमात्यो मेधावी शूरो दान्तो विचक्षणः। राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम्॥

म. भा. सभा. अ. ५।३०

"बुद्धिमान, शूर, जितेन्द्रिय, तथा चतुर एकही राजमन्त्रीसे भी राजा अथवा राजकुमार बडे वैभव संपन्न हो सकते हैं।"

एव गते न शक्ष्यामि किंचित्कारयितुं त्वया ॥ ७ ॥
न चापि तव संकल्पं मोघमिच्छामि दानव।
कृष्णस्य क्रियतां किंचित्तथा प्रतिकृतं मयि॥ ८ ॥
चोदितो वासुदेवस्तु मयेन भरतर्षभ ।
मुहूर्तमिव संदध्यौ किमयं चोद्यतामिति ॥ ९ ॥
ततो विचिन्त्य मनसा लोकनाथः प्रजापतिः।
चोदयामास तं कृष्णः सभा वै क्रियतामिति॥१० ॥
यदि त्वं कर्तुकामोऽसि प्रियं शिल्पवतां वर।
धर्मराजस्य दैतेय यादृशीमिह मन्यसे ॥ ११ ॥
यां कृतां नाऽनुकुर्युर्हि मानवाः प्रेक्ष्य विस्मिताः ।
मनुष्यलोके सकले तादृशीं कुरु वै सभाम्॥ १२ ॥
यत्र दिव्यानभिप्रायान्पश्येम हि कृतांस्त्वया ।
आसुरान्मानुषांश्चैव सभां तां कुरु वै मय ॥ १३ ॥
वैशम्पायन उवाच–प्रतिगृह्य तु तद्वाक्यं संप्रहृष्टो मयस्तदा ।
विमानप्रतिमां चक्रे पाण्डवस्य शुभां सभाम्॥१४॥
ततः कृष्णश्च पार्थश्च धर्मराजे युधिष्ठिरे ।

अर्जुन बोले, कि हे अनघ! तुम मृत्यु के मुखसे अपनेको रक्षित जानकर पलटेमें उपकार करना चाहते हो, सो इस दशामें तुमसे कोई कार्य करा लेना ठीक नहीं है पर यहभी नहीं चाहता, कि तुम्हारी कल्पना व्यर्थ हो, सो तुम श्रीकृष्णचन्द्रका कोई कार्य कर दो, उसीसे मेरा प्रत्युपकार हो जायगा। (७-८)

अर्जुनकी आज्ञासे जब मयदानवने वासुदेवसे प्रार्थना करी। तब उन्होंने सोचा, कि इसको किस काममें लगाऊं? पलभर ऐसी चिन्ताकर प्रजापति लोकनाथ श्रीकृष्णचन्द्रने आज्ञा की, कि हे शिल्पदक्ष दानव! तुम मेरा प्रिय कार्य करना चाहो, तो युधिष्ठिरके लिये अपनी इच्छानुरूप एक सभा बना दो। वह सभा ऐसी बने, कि जिसे देखकर धरती भरका कोईभी मनुष्य वैसी दूसरी सभा न बना सके और जिसमें दिव्य, आसुर वा मानवीय, सर्व प्रकारके अभिप्राय अर्थात् बनावटकी सब चतुरता दीख पडे। (९-१३)

श्रीवैशम्पायनजी बोले, कि मयदानव ने प्रसन्नचित्तसे यह बात मानके पाण्डवों के लिये विमानके समान एक सभामण्डपकी छवि बनायी। अनन्तर कृष्ण

सर्वमेतत्समावेश्य दर्शयामासतुर्मयम् ॥ १५ ॥
तस्मै युधिष्ठिरः पूजां यथार्हामकरोत्तदा ।
स तु तां प्रतिजग्राह मयः सत्कृत्य भारत ॥ १६ ॥
स पूर्वदेवचरितं तदा तत्र विशांपते ।
कथयामास दैतेयः पाण्डुपुत्रेषु भारत ॥ १७ ॥
स कालं कंचिदाश्वस्य विश्वकर्मा विचिन्त्य तु ।
सभां प्रचक्रमे कर्तुं पाण्डवानां महात्मनाम् ॥ १८ ॥
अभिप्रायेण पार्थानां कृष्णस्य च महात्मनः ।
पुण्येऽहनि महातेजाः कृतकौतुकमङ्गलः ॥ १९ ॥
तर्पयित्वा द्विजश्रेष्ठान्पायसेन सहस्रशः ।
धनं बहुविधं दत्त्वा तेभ्य एव च वीर्यवान् ॥ २० ॥
सर्वर्तुगुणसंपन्नां दिव्यरूपां मनोरमाम् ।
दशकिष्कुसहस्रां तां मापयामास सर्वतः ॥ २१ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां सभापर्वणि
सभाक्रियापर्वणि प्रथमोऽध्यायः ॥ १ ॥

गमनाय मतिं चक्रे पितुर्दर्शनलालसः ।
धर्मराजमथाऽऽमन्त्र्य पृथां च पृथुलोचनः ॥ २ ॥
ववन्दे चरणौ मूर्ध्ना जगद्वन्द्यः पितृष्वसुः ।
स तया मूर्ध्न्युपाघ्रातः परिष्वक्तश्च केशवः ॥ ३ ॥
ददर्शाऽनन्तरं कृष्णो भगिनीं स्वां महायशाः ।
तामुपेत्य हृषीकेशः प्रीत्या बाष्पसमन्वितः ॥ ४ ॥
अर्थ्यं तथ्यं हितं वाक्यं लघु युक्तमनुत्तरम् ।
उवाच भगवान्भद्रां सुभद्रां भद्रभाषिणीम् ॥ ५ ॥
तया स्वजनगामीनि श्रावितो वचनानि सः ।
सम्पूजितश्चाऽप्यसकृच्छिरसा चाऽभिवादितः ॥ ६ ॥
तामनुज्ञाप्य वार्ष्णेयः प्रतिनन्द्य च भामिनीम् ।
ददर्शाऽनन्तरं कृष्णां धौम्यं चापि जनार्दनः ॥ ७ ॥
ववन्दे च यथान्यायं धौम्यं पुरुषसत्तमः ।
द्रौपदीं सान्त्वयित्वा च आमन्त्र्य च जनार्दनः ॥ ८ ॥
भ्रातॄनभ्यगमद्विद्वान्पार्थेन सहितो बली ।
भ्रातृभिः पञ्चभिः कृष्णो वृतः शक्र इवाऽमरैः ९ ॥
यात्राकालस्य योग्यानि कर्माणि गरुडध्वजः ।

कुछ दिन परम सुखसे गवाया आगे एक दिन पिताके दर्शनको जाना चाहा। जगपूज्य पद्मनेत्र श्रीकृष्णचन्द्र धर्मराज और पृथाको सम्मानित कर अपनी फूफी कुन्तीके दोनों पांवोंमें लगे। पृथाने उन को सिर सूंघके गलेमें लगाया। आगे अति यशोवन्त भगवान हृषीकेश अपनी सुभाषिणी बहिन सुभद्राको देख आनन्द के आंसुओंसे नेत्रोंको भर उसके पास गये और बडे प्रेमसे संक्षेपमें उसको अर्थ पूरित हित, उत्तरके अयोग्य सत्य वचन बोले। १—५।

सुभद्राने भी बार बार उनके पांव लगकर स्वजनोंसे जो कुछ कहना था, कह दिया। वृष्णिवंशी श्रीकृष्णने बहिन का उचित आदर कर द्रौपदी और धौम्यकी भेट की और धौम्यकी यथोचित पूजा कर द्रौपदीको सम्मानित किया और हर प्रकारसे समझाया। आगे पुरुषवर विद्वान जनार्दन अर्जुनके संग युधिष्ठिरादि भाइयोंके निकट गये। इन्द्र जिस प्रकार अमरवृन्दसे घेर जाते हैं, वैसेही यदुकुलश्रेष्ठ महाबली श्रीकृष्णचन्द्र पांच भाइयोंसे घेर गये अनन्तर नहा धोके

गमनाय मतिं चक्रे पितुर्दर्शनलालसः ।
धर्मराजमथाऽऽमन्त्र्य पृथां च पृथुलोचनः ॥ २ ॥
ववन्दे चरणौ मूर्ध्ना जगद्वन्द्यः पितृष्वसुः ।
स तया मूर्ध्न्युपाघ्रातः परिष्वक्तश्च केशवः ॥ ३ ॥
ददर्शाऽनन्तरं कृष्णो भगिनीं स्वां महायशाः ।
तामुपेत्य हृषीकेशः प्रीत्या बाष्पसमन्वितः ॥ ४ ॥
अर्थ्यं तथ्यं हितं वाक्यं लघु युक्तमनुत्तरम् ।
उवाच भगवान्भद्रां सुभद्रां भद्रभाषिणीम् ॥ ५ ॥
तया स्वजनगामीनि श्रावितो वचनानि सः ।
संपूजितश्चाऽप्यसकृच्छिरसा चाऽभिवादितः ॥ ६ ॥
तामनुज्ञाप्य वार्ष्णेयः प्रतिनन्द्य च भामिनीम् ।
ददर्शाऽनन्तरं कृष्णां धौम्यं चापि जनार्दनः ॥ ७ ॥
ववन्दे च यथान्यायं धौम्यं पुरुषसत्तमः ।
द्रौपदीं सान्त्वयित्वा च आमन्त्र्य च जनार्दनः ॥ ८ ॥
भ्रातॄनभ्यगमद्विद्वान्पार्थेन सहितो बली ।
भ्रातृभिः पञ्चभिः कृष्णो वृतः शक्र इवाऽमरैः ९ ॥
यात्राकालस्य योग्यानि कर्माणि गरुडध्वजः ।

कुछ दिन परम सुखसे गंवाया, आगे एक दिन पिताके दर्शनको जाना चाहा। जगपूज्य पद्मनेत्र श्रीकृष्णचन्द्र धर्मराज और पृथाको सम्मानित कर अपनी फूफी कुन्तीके दोनों पांवोंमें लगे। पृथाने उन को सिर सूंघके गलेमें लगाया। आगे अति यशोवन्त भगवान हृषीकेश अपनी सुभाषिणी बहिन सुभद्राको देख आनन्द के आंसुओंसे नेत्रोंको भर उसके पास गये और बडे प्रेमसे संक्षेपमें उसको अर्थ पूरित, हित, उत्तरके अयोग्य सत्य वचन बोले। (१—५)

सुभद्राने भी बार बार उनके पांव लगकर स्वजनोंसे जो कुछ कहना था, कह दिया। वृष्णिवंशी श्रीकृष्णने बहिन का उचित आदर कर द्रौपदी और धौम्यकी भेंट की और धौम्यकी यथोचित पूजा कर द्रौपदीको सम्मानित किया और हर प्रकारसे समझाया। आगे पुरुषवर विद्वान जनार्दन अर्जुनके संग युधिष्ठिरादि भाइयोंके निकट गये। इन्द्र जिस प्रकार अमरवृन्दसे घेरे जाते हैं, वैसेही यदुकुलश्रेष्ठ महाबली श्रीकृष्णचन्द्र पांच भाइयोंसे घेरे गये, अनन्तर नहा धोके

कर्तुकामः शुचिर्भूत्वा स्नातवान्समलंकृतः ॥ १० ॥
अर्चयामास देवांश्च द्विजांश्च यदुपुङ्गवः ।
माल्यजाप्यनमस्कारैर्गन्धैरुच्चावचैरपि ॥ ११ ॥
स कृत्वा सर्वकार्याणि प्रतस्थे तस्थुषां वरः ।
उपेत्य स यदुश्रेष्ठो बाह्यकक्षां विनिर्गतः ॥ १२ ॥
स्वस्तिवाच्यार्हतो विप्रान्दधिपात्रफलाक्षतैः ।
वसु प्रदाय च ततः प्रदक्षिणमथाकरोत् ॥ १३ ॥
काञ्चनं रथमास्थाय तार्क्ष्यकेतनमाशुगम् ।
गदाचक्रासिशार्ङ्गाद्यैरायुधैरावृतं शुभम् ॥ १४ ॥
तिथावप्यथ नक्षत्रे मुहूर्ते च गुणान्विते ।
प्रययौ पुण्डरीकाक्षः शैब्यसुग्रीववाहनः ॥ १५ ॥
अन्वारुरोह चाप्येनं प्रेम्णा राजा युधिष्ठिरः ।
अपास्य चास्य यन्तारं दारुकं यन्तृसत्तमम् १६ ॥
अभीषून्संप्रजग्राह स्वयं कुरुपतिस्तदा ।
उपारुह्यार्जुनश्चापि चामरव्यजनं सितम् ॥ १७ ॥
रुक्मदण्डं बृहद्बाहुर्विदुधाव प्रदक्षिणम् ।
तथैव भीमसेनोऽपि यमाभ्यां सहितो बली ॥ १८ ॥

शुचि होकर अलङ्कारादि पहिर यात्राकालके कर्मोंको पूरा करनेकी इच्छासे देव द्विजोंको माला मन्त्र, नमस्कार और नाना प्रकारके सुगंधित पदार्थोंसे पूजने लगे। ९-११

यदुकुलश्रेष्ठ सनातन भगवान पुण्डरीकाक्षने सब कार्य कर लेनेके पीछे बाहरकी कक्ष्यामें निकलके पूजनीय ब्राह्मणोंसे दधि भरे पात्र फल और अक्षतसे स्वस्ति कहलाकर धन देके परिक्रमा की। आगे गदा, खड्ग शार्ङ्ग आदि अनेक शस्त्रोंसे सजे सजाये शैब्य तथा सुग्रीवादि चार घोड़ोंसे जुते आशुगामी, गरुडध्वज सुवर्ण रथ पर चढके शुभ दिनको, शुभ संयोग शुभमुहूर्त पर पधारे। ( १२–१५ )

कुरुनाथ युधिष्ठिरभी उनके प्रेमसे पीछे रथ पर चढ और सारथिवर दारुकको अलग बैठाके आपही रथकी रास थाम ली। दीर्घभुज अर्जुनभी रथ पर चढके श्रीकृष्णको परिक्रमा दे सुवर्ण दण्डयुक्त श्वेत चवर डोलने लगे। इसी प्रकार महाबली भीम अपने भाई नकुल और सहदेव के साथ तथा नागरिक लोगों और ऋत्विजों के साथ श्रीकृष्ण के पीछे चलने लगे। चार शिष्योंके

पृष्ठतोऽनुययौ कृष्णमृत्विक्पौरजनैः सह ।
स तथा भ्रातृभिः सर्वैः केशवः परवीरहा ॥ १९ ॥
अन्वीयमानः शुशुभे शिष्यैरिव गुरुः प्रियैः ।
पार्थमामन्त्र्य गोविन्दः परिष्वज्य सुपीडितम् ॥ २० ॥
युधिष्ठिरं पूजयित्वा भीमसेनं यमौ तथा ।
परिष्वक्तो भृशं तैस्तु यमाभ्यामभिवादितः ॥ २१ ॥
योजनार्धमथो गत्वा कृष्णः परपुरंजयः ।
युधिष्ठिरं समामन्त्र्य निवर्तस्वेति भारत ॥ २२ ॥
ततोऽभिवाद्य गोविन्दः पादौ जग्राह धर्मवित् ।
उत्थाप्य धर्मराजस्तु मूर्ध्न्युपाघ्राय केशवम् ॥ २३ ॥
पाण्डवो यादवश्रेष्ठं कृष्णं कमललोचनम् ।
गम्यतामित्यनुज्ञाप्य धर्मराजो युधिष्ठिरः ॥ २४ ॥
ततस्तैः संविदं कृत्वा यथावन्मधुसूदनः ।
निवर्त्य च तथा कृच्छ्रात्पाण्डवान्सपदानुगान् ॥ २५ ॥
स्वां पुरीं प्रययौ हृष्टो यथा शक्रोऽमरावतीम् ।
लोचनैरनुजग्मुस्ते तमाद्दृष्टिपथात्तदा ॥ २६ ॥
मनोभिरनुजग्मुस्ते कृष्णं प्रीतिसमन्वयात् ।

पीछे पीछे जानेसे गुरु जिस प्रकार सुशोभित होते है, शत्रुनाशी नारायण भाइयोंके पीछे चलनेसे वैसी शोभा पाने लगे । ( १९–२० )

अनन्तर गोविन्दने अर्जुनको बडे प्रेमसे गले लगाकर युधिष्ठिर तथा भीमसेनकी पूजा की और नकुल सहदेवकोभी गले लगाके लाड दुलार किया। युधिष्ठिर आदि ने भी कृष्णको गले लगाया; केवल दोनो माद्रीकुमारोंने उनको प्रणाम किया। इस प्रकारसे आधा योजन पथ जानेके पीछे शत्रुपुर जीतनेवाले धर्मके जानकार श्रीकृष्णने युधिष्ठिर को पुकार कर यह कहके कि " आप लौट जांय" उनके दोनो पांव पकड लिये । धर्मराज युधिष्ठिरने शिर सूंघके यादवश्रेष्ठ कमललोचन केशवको उठा कर जानेकी आज्ञा दी । इसके अनन्तर मधुसूदन " फिर आऊंगा " इत्यादि यथायोग्य सम्भाषण पूर्वक अति कष्टसे उनको निवृत्त कर ऐसे प्रसन्नमनसे अपनी पुरीको गये, कि जैसे इन्द्र अमरावतीकी ओर जाय । २०–२६

जितनी दूर आंख चली पाण्डवोंकी दृष्टि श्रीकृष्ण परही जमी रही और

अतृप्तमनसामेव तेषां केशवदर्शने ॥
क्षिप्रमन्तर्दधे शौरिश्चक्षुषां प्रियदर्शनः ॥ २७ ॥
अकामा एव पार्थास्ते गोविन्दगतमानसाः ।
निवृत्योपययुस्तूर्णं स्वपुरं पुरुषर्षभाः ॥ २८ ॥
स्यन्दनेनाऽथ कृष्णोऽपि त्वरितं द्वारकामगात् ।
सात्वतेन च वीरेण पृष्ठतो यायिना तदा ॥ २९ ॥
दारुकेण च सूतेन सहितो देवकीसुतः ।
स गतो द्वारकां विष्णुर्गरुत्मानिव वेगवान् ॥ ३० ॥
वैशम्पायन उवाच- निवृत्य धर्मराजस्तु सह भ्रातृभिरच्युत. ।
सुहृत्परिवृतो राजा प्रविवेश पुरोत्तमम् ॥ ३१ ॥
विसृज्य सुहृदः सर्वान्भ्रातॄन्पुत्रांश्च धर्मराट् ।
मुमोद पुरुषव्याघ्रो द्रौपद्या सहितो नृप ॥ ३२ ॥
वैशम्पायन उवाच- केशवोऽपि मुदा युक्तः प्रविवेश पुरोत्तमम् ।
पूज्यमानो यदुश्रेष्ठैरुग्रसेनमुखैस्तथा ॥ ३३ ॥
आहुकं पितरं वृद्धं मातरं च यशस्विनीम् ।
अभिवाद्य बलं चैव स्थितः कमललोचन' ॥ ३४ ॥
प्रद्युम्नसाम्बनिशठाश्चारुदेष्णं गदं तथा ।

---

अति प्रेमके कारण उनका मन श्रीकृष्ण के पीछे पीछे चला पर किसी प्रकार उनकी आख और मन नहीं पीछे हटा। प्रियदर्शन श्रीकृष्ण शीघ्रही उनकी दृष्टिके बाहर होगये । श्रीकृष्ण पर मन लगाये हुए पुरुषोंमे श्रेष्ठ पाण्डवगण इच्छा न रहने परभी अपने नगरको शीघ्र लौटे । तब देवकीनन्दन श्रीकृष्णभी गरुड समान दारुकके साथ रथ पर चढके द्वारकामें जा पहुंचे । सात्वत वीर सात्यकि उनके पीछे पीछे गये । २१—३० ।

श्रीवैशम्पायनजी बोले, कि अक्षय शीलयुक्त धर्मराज युधिष्ठिर भाइयोके साथ लौट करके बन्धुओंसे घेरे जाय पुरी में गये । आगे बन्धुओ, भाइयों और पुत्रोको विदा कर पुरुषवर धर्मराज द्रौपदी के साथ एकान्तमें आनन्द भोगने लगे । इधर कमलनेत्र केशवभी प्रसन्न मनसे अपने सुन्दरपुरमे प्रवेशपूर्वक यदुश्रेष्ठ उग्रसेनादिसे पूजे जाय और वृद्धपिता वसुदेवजी, यशस्विनी माता और ज्येष्ठ भ्राता बलदेवजी को प्रणाम कर विराज- ने लगे । अनन्तर प्रद्युम्न, साम्ब निशठ चारुदेष्ण गद, अनिरुद्ध, भानु आदि

अनिरुद्धं च भानुं च परिष्वज्य जनार्दनः ॥ ३५ ॥
स वृद्धैरभ्यनुज्ञातो रुक्मिण्या भवनं ययौ ॥ ३६ ॥
मयोऽपि स महाभागः सर्वरत्नविभूषिताम्।
विधिवत्कल्पयामास सभां धर्मसुताय वै ॥ ३७ ॥ [५८]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां सभापर्वणि सभाक्रियापर्वणि भगवद्याने द्वितीयोऽध्यायः ॥ २ ॥

वैशम्पायन उवाच--अथाऽब्रवीन्मयः पार्थमर्जुनं जयतां वरम् ।
आपृच्छे त्वां गमिष्यामि पुनरेष्यामि चाऽप्यहम्॥१॥
उत्तरेण तु कैलासं मैनाकं पर्वतं प्रति ।
यियक्षमाणेषु पुरा दानवेषु मया कृतम् ॥ २ ॥
चित्रं मणिमयं भाण्डं रम्यं बिन्दुसरः प्रति।
सभायां सत्यसन्धस्य यदासीद्वृषपर्वणः ॥ ३ ॥
आगमिष्यामि तद् गृह्य यदि तिष्ठति भारत ।
ततः सभां करिष्यामि पाण्डवस्य यशस्विनीम् ॥ ४ ॥
मनःप्रह्लादिनीं चित्रां सर्वरत्नविभूषिताम् ।
अस्ति बिन्दुसरस्युग्रा गदा च कुरुनन्दन ॥ ५ ॥
निहिता भावयाम्येवं राज्ञा हत्वा रणे रिपून् ।

पुत्रोंको गले लगाय वृद्धोंकी आज्ञासे रुक्मिणीजीके भवनमें जा विराजे। पश्चात् महाभाग्यवान मयासुरभी धर्म पुत्र युधिष्ठिर के लिये सर्व रत्नोंसे सुभूषित सभा मंदिर यथाशास्त्र बनानेका विचार करने लगे। ( ३१--३७ ) [ ५८ ]

सभापर्वमें दूसरा अध्याय समाप्त।

सभापर्वमें तीसरा अध्याय।

श्रीवैशम्पायनजी बोले, कि अनन्तर मय दानव विजयियोंमें श्रेष्ठ अर्जुनसे बोला, कि आपकी आज्ञा हो, तो अब विदा लेकर चला जाऊं, पीछे आऊंगा। पहिले मैंने कैलासके उत्तर मैनाक पर्वतके निकट दानवोंके युद्धकालमें बिन्दुसरोवरके पास एक विचित्र सुन्दर मणियुक्त सामान बनाया था; उस समय उसे सत्य प्रतिज्ञा करनेवाले वृषपर्वाकी सभामें रखाथा। हे भारत! यदि वह आजतक विद्यमान हो, तो मैं मैनाकसे लौटते समय उसे लेआऊंगा और आप की यश बढानेवाली मनभावनी सर्वरत्न से सुहावनी विचित्र सभा बनाऊंगा। ( १ --४ )

हे कुरुनन्दन ! जान पडता है, कि उस बिन्दुसरोवरमें एक बडी कठोर

सुवर्णबिन्दुभिश्चित्रा गुर्वी भारसहा दृढा ॥ ६ ॥
सा वै शतसहस्रस्य संमिता शत्रुघातिनी ।
अनुरूपा च भीमस्य गाण्डीवं भवतो यथा ॥ ७ ॥
वारुणश्च महाशंखो देवदत्तः सुघोषवान् ।
सर्वमेतत्प्रदास्यामि भवते नाऽत्र संशयः ॥ ८ ॥
इत्युक्त्वा सोऽसुरः पार्थ प्रागुदीचीं दिशं गतः ।
अथोत्तरेण कैलासान्मैनाकं पर्वतं प्रति ॥ ९ ॥
हिरण्यशृङ्गः सुमहान्महामणिमयो गिरिः ।
रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः ॥ १० ॥
द्रष्टुं भागीरथीं गङ्गामुवास बहुलाः समाः ।
यत्रेष्टं सर्वभूतानामीश्वरेण महात्मना ॥ ११ ॥
आहृताः क्रतवो मुख्याः शतं भरतसत्तम ।
यत्र यूपा मणिमयाश्चैत्याश्चापि हिरण्मयाः ॥ १२ ॥
शोभार्थं विहितास्तत्र न तु दृष्टान्ततः कृताः ।
यत्रेष्ट्वा स गतः सिद्धिं सहस्राक्षः शचीपतिः ॥ १३ ॥
यत्र भूतपतिः सृष्ट्वा सर्वाँल्लोकान्सनातनः ।

---

गदाभी पड़ी है । राजा वृषपर्वाने लक्ष गदाओंके समान, बड़ा भार सहने योग्य, सुवर्ण, बिन्दु जटित, शत्रुनाशी उस कठोर गदासे शत्रुओं को हननकर उसे वहां गाड़ रखा है । गाण्डीव जैसे आपके योग्य है, वह गदाभी वैसेही भीमसेनके योग्य है । फिरभी वरुणजीका देवदत्त नामक बहुत बजनेवाला बड़ा भारी शङ्खभी उस सरोवरमें है; इसका सन्देह न कीजिये, कि मैं यह सब लाके आप को दूंगा । (६-८)

वह असुर पार्थसे ऐसा कहके पूर्वोत्तर ओरको पधारा । कैलासके उत्तर मैनाक-पर्वतके निकट हिरण्यशृङ्ग नामक अनेक मणियोंसे भरा बड़ा भारी गिरि है वहां सुन्दर बिन्दुसरोवर विद्यमान है। उस सरोवरके तटपर भगीरथने श्रीगङ्गाजीके दर्शनके लिये बहुत वर्ष गंवाये थे । हे भरतश्रेष्ठ! उस स्थानमें सर्वभूतोंके अधीश इन्द्रजीने सौ महायज्ञ करके शोभाके लिये पहिले कभी न बने मणिके यूप और सोनेके चैत्य बना गये हैं । वहां यज्ञ कर उन शचीनाथने सिद्धि लाभ की थी । (९-१३)

अति तेजोवन्त सनातन भूतनाथ महादेव सर्व लोकोंको रचके, उस स्थानमें

उपास्यते तिग्मतेजाः स्थितो भूतैः सहस्रशः ॥१४॥
नरनारायणौ ब्रह्मा यमः स्थाणुश्च पञ्चमः ।
उपासते यत्र सत्रं सहस्रयुगपर्यये ॥ १५ ॥
यत्रेष्टं वासुदेवेन सत्रैर्वर्षगणान्बहून् ।
श्रद्दधानेन सततं धर्मसंप्रतिपत्तये ॥ १६ ॥
सुवर्णमालिनो यूपाश्चैत्यांश्चाऽप्यतिभास्वरान् ।
ददौ यत्र सहस्राणि प्रयुतानि च केशवः ॥ १७ ॥
तत्र गत्वा स जग्राह गदां शंखं च भारत ।
स्फाटिकं च सभाद्रव्यं यदासीद्वृषपर्वणः ॥ १८ ॥
किंकराः सह रक्षोभिर्यदरक्षन्महद्धनम् ।
तदगृह्णान्मयस्तत्र गत्वा सर्वं महासुरः ॥ १९ ॥
तदाहृत्य च तां चक्रे सोऽसुरोऽप्रतिमां सभाम् ।
विश्रुतां त्रिषु लोकेषु दिव्यां मणिमयीं शुभाम्॥२०॥
गदां च भीमसेनाय प्रददौ प्रवरां तदा ।
देवदत्तं चाऽर्जुनाय शङ्खप्रवरमुत्तमम् ॥
यस्य शङ्खस्य नादेन भूतानि प्रचकम्पिरे ॥ २१ ॥
सभा च सा महाराज शातकुम्भमयद्रुमा ।

विराजमान होकर सहस्रों भूतोंसे पूजे जाते हैं। उस स्थानमें नर, नारायण, ब्रह्मा यम और रुद्र सहस्र युगोंके अन्त होने पर यज्ञ किया करते हैं। वासुदेव केशव ने धर्म संस्थापन करनेके लिये उस स्थानमें बहुत वर्षों तक सदा श्रद्धा सहित यज्ञ किया था, और उस स्थानमें उन्होंने सुवर्णमालायुक्त यूप चमकीले चैत्य और दूसरी सहस्रों बनी बनायी वस्तु दान दी थीं। ( १४–१७ )

हे भरतनन्दन! मयदानवने वहां जाके वृषपर्वाकी अधिकार की हुई गदा, शङ्ख और सभा बनानेके योग्य जितनी स्फटिककी सामग्री थी, सब ले ली। यक्ष और राक्षस लोग जो अनेक धनकी रखवारी करते थे, उस मयासुरने वहां जाके वह भी ले लिया। वह सब ले कर असुरने तीनो लोकोंमे प्रशंसित, मणिकी उस अप्रतिम सुन्दर सभाको रचा और भीमको वह अच्छी गदा तथा अर्जुनको देवदत्त नामक वह बडा भारी शङ्ख दिया, जिसके नादसे सब भूत कम्पित होते थे। ( १८-२१ )

महाराज! सुनोले वृक्षोंसे सुहावनी वह सभा चारों ओर दस सहस्र हाथ

दशकिष्कुसहस्राणि समन्ताद्‌ायताऽभवत्॥ २२ ॥
यथा वह्नेर्यथाऽर्कस्य सोमस्य च यथा सभा ।
भ्राजमाना तथाऽत्यर्थं दधार परमं वपुः ॥ २३ ॥
अभिघ्नतीव प्रभया प्रभामर्कस्य भास्वराम् ।
प्रबभौ ज्वलमानेव दिव्या दिव्येन वर्चसा॥ २४ ॥
नवमेघप्रतीकाशा दिवमावृत्य विष्ठिता ।
आयता विपुला रम्या विपाप्मा विगतक्लमा॥ २५ ॥
उत्तमद्रव्यसंपन्ना रत्नप्राकारतोरणा ।
बहुचित्रा बहुधना निर्मिता विश्वकर्मणा ॥ २६ ॥
न दाशार्ही सुधर्मा वा ब्रह्मणो वाऽथ तादृशी ।
सभा रूपेण संपन्ना यां चक्रे मतिमान्मयः ॥ २७ ॥
तां स्म तत्र मयेनोक्ता रक्षन्ति च वहन्ति च ।
सभामष्टौ सहस्राणि किंकरा नाम राक्षसाः ॥ २८ ॥
अन्तरिक्षचरा घोरा महाकाया महाबलाः ।
रक्ताक्षाः पिंगलाक्षाश्च शुक्तिकर्णाः प्रहारिणः ॥२९॥
तस्यां सभायां नलिनीं चकाराऽप्रतिमां मयः ।
वैदूर्यपत्रविततां मणिनालमयाम्बुजाम् ॥ ३० ॥
पद्मसौगन्धिकवतीं नानाद्विजगणायुताम् ।

---

फैली थी। उस सभाने सूर्य चन्द्रमाकी सभाके समान चमकता अति सुन्दर स्वरूप प्राप्त किया। अपनी प्रभाके प्रभाव से सूर्यकी तेज प्रभाको भी लजाया। लोकोंमें न मिलने वाले तेजसे मानो प्रज्वलितकी भांति नवमेघके समान आकाश मण्डलको ढंप लिया। वास्तवमें दक्ष सुमति मयने जैसी लम्बी चौड़ी अति निर्मल, थकावट मिटावनी, मनोहर रूपिणी, अनेक चित्रोंसे सुहावनी रत्नप्राचीर वेष्टित बहुमूल्य सभा बनायी, वैसी न तो श्रीकृष्ण चन्द्रकी, न ब्रह्माजी की और न किसी दूसरे सुरकी थी॥ २२-२७

आकाश में उड़नेवाले, महाबली, भारी देहधारी, लालनेत्र, शुक्तिकर्णवाले, अस्त्र लिये हुए आठ सहस्र किङ्कर नामक भयावने राक्षस मयकी आज्ञासे सभाकी रखवारी करने और वहने ढोनेमें लगे थे। उस सभामें मयने एक बड़ा सरोवर खुदवाया। उस सरोवरमें मणिके मृणाल और नीले कह्लार कदम्ब सुहाते थे और भांति भांतिके पक्षी इधर उधर खेल

पुष्पितैः पङ्कजैश्चित्रां कूर्मैर्मत्स्यैश्च काञ्चनैः ॥ ३१ ॥
चित्रस्फटिकसोपानां निष्पङ्कसलिलां शुभाम् ३२॥
मन्दानिलसमुद्धूतां मुक्ताबिन्दुभिराचिताम् ।
महामणिशिलापट्टबद्धपर्यन्तवेदिकाम् ॥ ३३ ॥
मणिरत्नाचितां तां तु केचिदभ्येत्य पार्थिवाः ।
दृष्ट्वाऽपि नाऽभ्यजानन्त तेऽज्ञानात्प्रपतन्त्युत ॥३४ ॥
तां सभामभितो नित्यं पुष्पवन्तो महाद्रुमाः ।
आसन्नानाविधा नीलाः शीतच्छाया मनोरमाः ३५॥
काननानि सुगन्धीनि पुष्करिण्यश्च सर्वशः ।
हंसकारण्डवोपेताश्चक्रवाकोपशोभिताः ॥ ३६ ॥
जलजानां च पद्मानां स्थलजानां च सर्वशः ।
मारुतो गन्धमादाय पाण्डवान्स्म निषेवते ॥३७॥
ईदृशीं तां सभां कृत्वा मासैः परिचतुर्दशैः ।
निष्ठितां धर्मराजाय मयो राजन्न्यवेदयत् ॥ ३८ ॥ [ ९६ ]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां सभापर्वणि सभाक्रियापर्वणि सभानिर्माणे तृतीयोऽध्यायः ॥ ३ ॥

---

वैशम्पायन उवाच- ततः प्रवेशनं तस्यां चक्रे राजा युधिष्ठिरः ।
अयुतं भोजयित्वा तु ब्राह्मणानां नराधिप ॥ १ ॥

---

कूद रहे थे, खिले कमल और सुनैाली मछली तथा कछुओंसे सुहावने चित्रित स्फटिककी सीढीवाले मन्दपवनसे आन्दोलित, मोती विन्दुओंसे रचित महामणि, शिलापट्टकी वेदीसे चारों ओर सुमण्डित, मणि रत्नोंसे सुशोभित उस अमल ताल को देखकर कोई कोई राजकर्म चारी भ्रमसे उसमें गिर गये। ( ३१—३४ )

उस सभाके चारों ओर फलवाले नील ठण्डी छायावाले अनेक भांतिके मन हरनेहारे वृक्ष और सुगन्धी वन तथा हंस, कारण्डव तथा चकवोंसे भरे तालाव इधर उधर सुहाते थे। गन्धवहनेवाली पवन सर्वत्र जलमें उपजे कमलोंकी सुगन्ध ले ले पाण्डवोंकी सेवा किया करती थी। महाराज ! मयने चौदह महीनेमें ऐसी अच्छी सभा पूरी बनाकर धर्मराजको समाचार दिया। ( ३५—३८ ) [९६]

सभापर्वमें तीसरा अध्याय समाप्त।

---

सभापर्वमें चौथा अध्याय।

श्रीवैशम्पायनजी बोले, कि अनन्तर नरनाथ युधिष्ठिरने मधुयुक्त, घृतमिश्रित

साज्येन पायसेनैव मधुना मिश्रितेन च ।
भक्ष्यैर्मूलैः फलैश्चैव मांसैर्वाराहहारिणैः ॥ २ ॥
कृसरेणाऽथ जीवन्त्या हविष्येण च सर्वशः ।
मांसप्रकारैर्विविधैः खाद्यैश्चापि तथा नृप ॥ ३ ॥
चोष्यैश्च विविधै राजन्पेयैश्च बहुविस्तरैः ।
अहतैश्चैव वासोभिर्माल्यैरुच्चावचैरपि ॥ ४ ॥
तर्पयामास विप्रेन्द्रान्नानादिग्भ्यः समागतान् ।
ददौ तेभ्यः सहस्राणि गवां प्रत्येकशः पुनः ॥ ५ ॥
पुण्याहघोषस्तत्राऽऽसीद्दिवस्पृगिव भारत ।
वादित्रैर्विविधैर्दिव्यैर्गन्धैरुच्चावचैरपि ॥ ६ ॥
पूजयित्वा कुरुश्रेष्ठो दैवतानि निवेश्य च ।
तत्र मल्ला नटा झल्लाः सूता वैतालिकास्तथा ।
उपतस्थुर्महात्मानं धर्मपुत्रं युधिष्ठिरम् ॥ ७ ॥
तथा स कृत्वा पूजां तां भ्रातृभिः सह पाण्डवः ।
तस्यां सभायां रम्यायां रेमे शक्रो यथा दिवि ॥ ८ ॥
सभायामृषयस्तस्यां पाण्डवैः सह आसते ।
आसांचक्रुर्नरेन्द्राश्च नानादेशसमागताः ॥ ९ ॥

पायसान्न, बहुविध फल मूल और हरिण शूकर आदिके मांससे दशसहस्र ब्राह्मणोंको यथायोग्य भोजन कराके सभामें प्रवेश किया । महाराज ! उन्होंने नाना दिशाओंसे आये विप्रवर्गको तिलोदन जीवन्तीशाक, हविष्यान्न, मांसके अनेक पक्वान्न इत्यादि बहुविध खाने, चूसने चाटने, पीनेकी अपरिमित सामग्री और कोरे चीर, गहनोंसे प्रसन्न किया और उनमेंसे हरेकको सहस्र गौ दान दी । (१—५)

हे भरतनन्दन ! उस कालमें पुण्याह-ध्वनि अर्थात् "आज कैसा शुभदिन है" लोगोंका यह आनन्द कोलाहल आकाश-में गूंजने लगा । कुरुश्रेष्ठ युधिष्ठिरके बाजे और फूल धूपादिकी मनहरनी गन्धसे देवोंकी पूजाकर सभामें घुसने पर वहां मल्ल, झल्ल, नट सूत और स्तुति गाने वाले अपना अपना गुण प्रगट कर उनकी उपासना करने लगे । (६-७)

पञ्च पाण्डव उसी भांति भाइयोंके से उक्त सभाकी प्रतिष्ठा कर आसनोंमें बैठे देवराजकी भांति परम सुखसे वहां विराज-ने लगे । वहां अनेक देशोंसे आये [illegible]

असितो देवलः सत्यः सर्पिर्मालीमहाशिराः।
अर्वावसुः सुमित्रश्च मैत्रेयः शुनको बलिः॥ १०॥
वको दाल्भ्यः स्थूलशिराः कृष्णद्वैपायनः शुकः।
सुमन्तुर्जैमिनिः पैलो व्यासशिष्यास्तथा वयम्॥ ११॥
तित्तिरिर्याज्ञवल्क्यश्च ससुतो लोमहर्षणः।
अप्सुहोम्यश्च धौम्यश्च अणीमाण्डव्यकौशिकौ॥ १२॥
दामोष्णीषस्त्रैवलिश्च पर्णादो घटजानुकः।
मौञ्जायनो वायुभक्षः पाराशर्यश्च सारिकः॥ १३॥
बलीवाकः सिलीवाकः सत्यपालः कृतश्रमः।
जातूकर्णः शिखावांश्च आलम्बः पारिजातकः॥ १४॥
पर्वतश्च महाभागो मार्कण्डेयो महामुनिः।
पवित्रपाणिः सावर्णो भालुकिर्गालवस्तथा॥ १५॥
जङ्घाबन्धुश्च रैभ्यश्च कोपवेगस्तथा भृगुः।
हरिबभ्रुश्च कौण्डिन्यो बभ्रुमाली सनातनः॥ १६॥
काक्षीवानौशिजश्चैव नाचिकेतोऽथ गौतमः।
पैङ्गयो वराहः शुनकः शाण्डिल्यश्च महातपाः॥ १७॥
कुक्कुरो वेणुजङ्घोऽथ कालापः कठ एव च।
मुनयो धर्मविद्वांसो धृतात्मानो जितेन्द्रियाः॥ १८॥
एते चाऽन्ये च बहवो वेदवेदाङ्गपारगाः।

और ऋषि पाण्डवोंके साथ बैठते थे। असित, देवल, सत्य, सर्पिर्माली, महाशिरा, अर्वावसु, सुमित्र, मैत्रेय शुनक, बलि, वक, दाल्भ्य, स्थूलशिरा, कृष्णद्वैपायन, शुक, सुमन्तु, जैमिनि, पैल, और महित व्यासजीके सब शिष्य, तित्तिरि, याज्ञवल्क्य, लोमहर्षण और उनके पुत्र, अप्सुहोम्य, धौम्य, अणीमाण्डव्य, कौशिक, दामोष्णीष, त्रैवलि, पर्णाद, घटजानुक, मौञ्जायन, वायुभक्ष पाराशर्य, सारिक, बलीवाक, सिलीवाक, सत्यपाल, कृतश्रम, जातूकर्ण, शिखावान, आलम्ब, पारिजातक, महाभाग पर्वत, महामुनि मार्कण्डेय, पवित्रपाणि, सावर्ण, भालुकि, गालव, जङ्घाबन्धु, रैभ्य, कोपवेग, भृगु, हरिबभ्रु, कौण्डिन्य, बभ्रुमाली, सनातन काक्षीवान, औशिज, नाचिकेत, गौतम, पैङ्ग, वराह, शुनक, महातपा शांडिल्य, कुक्कुर, वेणुजंघ, कालाप और कठ, धर्मके जानकार संयतात्मा और जितेन्द्रिय

उपासते महात्मानं सभायामृषिसत्तमाः ॥ १९ ॥
कथयन्तः कथाः पुण्या धर्मज्ञाः शुचयोऽमलाः ।
तथैव क्षत्रियश्रेष्ठा धर्मराजमुपासते ॥ २० ॥
श्रीमान्महात्मा धर्मात्मा मुञ्जकेतुर्विवर्धनः ।
संग्रामजिद्दुर्मुखश्च उग्रसेनश्च वीर्यवान् ॥ २१ ॥
कक्षसेनः क्षितिपतिः क्षेमकश्चाऽपराजितः ।
काम्बोजराजः कमठः कम्पनश्च महाबलः ॥ २२ ॥
सततं कम्पयामास यवनानेक एव यः ॥ २३ ॥
बलपौरुषसम्पन्नान्कृतास्त्रानमितौजसः ।
यथाऽसुरान्कालकेयान्देवो वज्रधरस्तथा ॥ २४ ॥
जटासुरो मद्रकाणां च राजा कुन्तिः पुलिन्दश्च किरातराजः ।
तथाङ्गवङ्गौ सह पुण्ड्रकेण पाण्ड्योड्रराजौ च सहान्ध्रकेण ॥ २५ ॥
अंगो वगः सुमित्रश्च शैब्यश्चाऽमित्रकर्शनः ।
किरातराजः सुमना यवनाधिपतिस्तथा ॥ २६ ॥
चाणूरो देवरातश्च भोजो भीमरथश्च यः ।
श्रुतायुधश्च कालिंगो जयसेनश्च मागधः ॥ २७ ॥
सुकर्मा चेकितानश्च पुरुश्चाऽमित्रकर्शनः ।
केतुमान्वसुदानश्च वैदेहोऽथ कृतक्षणः ॥ २८ ॥
सुधर्मा चाऽनिरुद्धश्च श्रुतायुश्च महाबलः ।

यज्ञ में और वेद वेदांगों में पाण्डित, धर्मज्ञ और पवित्र इसी अनेक ऋषि सत्तम सब विध विशुद्ध पुण्यकथा कहकर धर्मराजकी उपासना करते थे। (८-२०)

और श्रीमान महात्मा धर्मात्मा मुञ्जकेतु, विवर्धन, संग्रामजित, दुर्मुख, पराक्रमी उग्रसेन पृथ्वीनाथ कक्षसेन अपराजित क्षेमक, काम्बोजराज कमठ, बडे पराक्रमी कम्पन जिन्होंने [illegible] आदि असुरकुलनाशी [illegible] देवराज की भांति अकेले बलमें बढे, [illegible] शस्त्रोंमें बढे, तेजमें विकट, यवनोंको कंपाया था। मद्रनाथ जटासुर, कुन्ति, किरातराज पुलिन्द, अङ्ग, वङ्ग, पुण्ड्रक, पाण्ड्य, उड्रराज, अन्ध्रक, सुमित्र, अंग, वंग, शत्रुनाशी शैब्य, किरातराज सुमना, यवननाथ चाणूर, देवरात, भोज, भीमरथ, कलिंगराज श्रुतायुध, मगधके जयसेन, सुकर्मा, चेकितान, शत्रुनाशी पुरु, केतुमान, वसुदान, [illegible]

अनूपराजो दुर्धर्षः क्रमजिच्च सुदर्शनः ॥ २९ ॥
शिशुपालः सहसुतः करूषाधिपतिस्तथा ।
वृष्णीनां चैव दुर्धर्षाः कुमारा देवरूपिणः ॥ ३० ॥
आहुको विपृथुश्चैव गदः सारण एव च ।
अक्रूरः कृतवर्मा च सत्यकश्च शिनेः सुतः ॥ ३१ ॥
भीष्मकोऽथाऽऽकृतिश्चैव द्युमत्सेनश्च वीर्यवान्।
केकयाश्च महेष्वासा यज्ञसेनश्च सौमकिः ।
केतुमान्वसुमांश्चैव कृतास्त्रश्च महाबलः ॥ ३२ ॥
एते चाऽन्ये च बहवः क्षत्रिया मुख्यसंमताः ।
उपासते सभायां स्म कुन्तीपुत्रं युधिष्ठिरम्॥ ३३ ॥
अर्जुनं ये च संश्रित्य राजपुत्रा महाबलाः ।
अशिक्षन्त धनुर्वेदं रौरवाजिनवाससः ॥ ३४ ॥
तत्रैव शिक्षिता राजन्कुमारा वृष्णिनन्दनाः ।
रौक्मिणेयश्च साम्बश्च युयुधानश्च सात्यकि ॥३५॥
सुधर्मा चाऽनिरुद्धश्च शैब्यश्च नरपुङ्गवः ।
एते चाऽन्ये च बहवो राजानः पृथिवीपते ॥ ३६ ॥
धनञ्जयसखा चाऽत्र नित्यमास्ते स्म तुम्बुरुः ।
उपासते महात्मानमासीनं सप्तविंशतिः ॥३७॥
चित्रसेनः सहामात्यो गन्धर्वाप्सरसस्तथा ।

---

सुधर्मा, अनिरुद्ध, अति बलवन्त श्रुतायुध, दुर्द्धर्ष अनूपराज, सुदर्शन, क्रमजित, पुत्रसहित शिशुपाल, करूषाधिप, वृष्णिवंशके कठोर देवरूपी कुमारगण, आहुक विपृथु, गद, सारण अक्रूर, कृतवर्मा, शिनिपुत्र सत्यक, भीष्मक, आकृति, वीर्यवान्त द्युमत्सेन, बडे चापधारी केकयगण और सोमकपुत्र यज्ञसेन और अस्त्रविद्यामें बलवान केतुमान तथा वसुमान यह सब और विनाके जाने दूसरे बहुतेरे क्षत्रिय भी धर्मराज युधिष्ठिरकी उपासनामें लगे रहते थे। (२९-३३)

महाराज ! प्रद्युम्न, साम्ब, युयुधान, सात्यकि, सुधर्मा, अनिरुद्ध, नरश्रेष्ठ शैब्य आदि वृष्णिनन्दनगण और अति पराक्रमी जितने राजकुमार मृगछाल पहिरे अर्जुनसे अस्त्र सीखते थे, वे भी उस सभामें उपस्थित रहते थे। इनके उपरान्त धनञ्जयके सखा तुम्बुरु, अमात्य सहित चित्रसेन, और ताललयमें रटे,

गीतवादित्रकुशलाः शम्यातालविशारदाः ॥ ३८ ॥
प्रमाणेऽथ लये स्थाने किंनराः कृतनिश्रमाः ।
संचोदितास्तुम्बुरुणा गन्धर्वसहितास्तदा ॥ ३९ ॥
गायन्ति दिव्यतानैस्ते यथान्यायं मनस्विनः ।
पाण्डुपुत्रानृषींश्चैव रमयन्त उपासते ॥ ४० ॥
तस्यां सभायामासीनाः सुव्रताः सत्यसंगराः ।
दिवीव देवा ब्रह्माणं युधिष्ठिरमुपासते ॥ ४१ ॥ [१३७]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां सभापर्वणि सभाक्रियापर्वणि सभाप्रवेशो नाम चतुर्थोऽध्यायः ॥ ४ ॥ समाप्तं च सभाक्रियापर्व ॥

अथ लोकपालसभाख्यानपर्व ॥

वैशम्पायन उवाच—अथ तत्रोपविष्टेषु पाण्डवेषु महात्मसु ।
महत्सु चोपविष्टेषु गन्धर्वेषु च भारत ॥ १ ॥
वेदोपनिषदां वेत्ता ऋषिः सुरगणार्चितः ।
इतिहासपुराणज्ञः पुराकल्पविशेषवित् ॥ २ ॥
न्यायविद्धर्मतत्त्वज्ञः षडंगविदनुत्तमः ।
ऐक्यसंयोगनानात्वसमवायविशारदः ॥ ३ ॥
वक्ता प्रगल्भो मेधावी स्मृतिमान्नयवित्कविः ।

गाजेबाजेमें छटे गन्धर्व्व किन्नर, और अप्सरा निकट रहती थीं। लयस्थान तथा प्रमाणके सुजान महामन किन्नर और गन्धर्व तुम्बुरुकी आज्ञा पाय दिव्यतानसे नियमपूर्वक गाय बजाय पाण्डव और ऋषियोंको उस सभामें प्रसन्न करते थे। स्वर्गमें देवगण जैसे ब्रह्माकी उपासना करते हैं, वैसे सत्यप्रण हाने, व्रतमाने पुरुषगण उस सभामें बैठे युधिष्ठिरकी उपासना करते थे। ३८—४१। [१३७]

चौथा अध्याय और सभाक्रियापर्व समाप्त।

पांचवां अध्याय और लोकपालसभाख्यान पर्व।

श्रीवैशम्पायनजी बोले, कि हे महाराज! महात्मा पाण्डवगण और प्रधान गन्धर्व उस सभामें बैठे थे, कि ऐसे समयमें सकल वेदोपनिषदोंके जानकार सुरोंके पूजनीय, इतिहास तथा पुराणोंके जानने वाले अतीत कल्पके विशेषज्ञ न्याय और धर्मके तत्त्वज्ञ शिक्षा कल्प व्याकरणादि षडङ्ग शास्त्रोंमें असाधारण ज्ञानी, परस्पर विरुद्ध विधिवाक्योंका एकीकरण करने वाले, वाक्योंको अलग अलग कर देने और एक कर्ममें अनेक धर्म सन्निवेश

परावरविभागज्ञः प्रमाणकृतनिश्चयः ॥ ४ ॥
पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित् ।
उत्तरोत्तरवक्ता च वदतोऽपि बृहस्पतेः ॥ ५ ॥
धर्मकामार्थमोक्षेषु यथावत्कृतनिश्चयः ।
तथा भुवनकोशस्य सर्वस्याऽस्य महामतिः॥ ६ ॥
प्रत्यक्षदर्शी लोकस्य तिर्यगूर्ध्वमधस्तथा ।
सांख्ययोगविभागज्ञो निर्विवित्सुः सुरासुरान्॥७॥
सन्धिविग्रहतत्त्वज्ञस्त्वनुमानविभागवित् ।
षाड्गुण्यविधियुक्तश्च सर्वशास्त्रविशारदः ॥ ८ ॥
युद्धगान्धर्वसेवी च सर्वत्राऽप्रतिघस्तथा ।
एतैश्चाऽन्यैश्च बहुभिर्युक्तो गुणगणैर्मुनिः ॥ ९ ॥
लोकाननुचरन्सर्वानागमत्तां सभां नृप ।
नारदः सुमहातेजा ऋषिभिः सहितस्तदा ॥ १० ॥
पारिजातेन राजेन्द्र पर्वतेन च धीमता ।
सुमुखेन च सौम्येन देवर्षिरमितद्युतिः ॥ ११ ॥
सभास्थान्पाण्डवान्द्रष्टुं प्रियमाणो मनोजवः ।

करनेके लिये अधिकारके अनुसार सम्बन्ध निरूपणके विषयमें बडे पण्डित, वाग्मी अति प्रगल्भ स्वभावी, मेधावी, स्मृतिमान, नीति शील, कवि, भले बुरेके अलग करनेमें ज्ञान रखनेवाले; प्रत्यक्ष, अनुमानादि प्रमाणोंसे वस्तुओंके विचारक, प्रतिज्ञा हेतु आदि पांच प्रकारके अङ्गयुक्त वाक्योंके गुण दोष जाननेवाले. बृहस्पतिजीके भी बात उठाने पर उनकी बातोंके क्रमसे उत्तर देनेमें समर्थ, धर्मार्थ काम मोक्ष चारों वर्गोंके सारके जानकार, योगबलसे क्या ऊर्ध्व क्या अध, क्या तिर्यक सम्पूर्ण भूमण्डलके प्रत्यक्षदर्शी, वेदान्त विचार और योगविभाग के जाननेवाले, झगडा उठा कर सम्पूर्ण देव और असुरोंको निर्वेदयुक्त करनेमें उद्यत, सन्धिविग्रहादिके तत्त्वज्ञ, अनुमान से कार्याकार्य विभागमें अभिज्ञ, सन्धि विग्रहादि विधिके उपदेश करनेवाले, सर्वशास्त्रोंमें पण्डित, युद्ध और नृत्यगीतादिको चाहनेवाले, सर्वत्र संचार करने वाले और दूसरे सब गुण रखनेवाले, आत्मतत्त्व ढूंढनेवाले, बडे तेजस्वी महर्षि नारद जीने पारिजात, धीमान पर्वत, सुमुख और सौम्य, इनके साथ लोकमण्डलमें घूमते घामते हुए पाण्डवोंके दर्शनके लिये प्रसन्न

जयाशीर्भिस्तु तं विप्रो धर्मराजानमार्चयत् ॥ १२॥
तमागतमृषिं दृष्ट्वा नारदं सर्वधर्मवित् ।
सहसा पाण्डवश्रेष्ठः प्रत्युत्थायाऽनुजैः सह ॥ १३ ॥
अभ्यवादयत प्रीत्या विनयावनतस्तदा ।
तदर्हमासनं तस्मै सम्प्रदाय यथाविधि ॥ १४ ॥
गां चैव मधुपर्कं च सम्प्रदायाऽर्घ्यमेव च ।
अर्चयामास रत्नैश्च सर्वकामैश्च धर्मवित् ॥ १५ ॥
तुतोष च यथावच्च पूजां प्राप्य युधिष्ठिरात ।
सोऽर्चितः पाण्डवैः सर्वैर्महर्षिर्वेदपारगः ॥ १६ ॥
धर्मकामार्थसंयुक्तं पप्रच्छेदं युधिष्ठिरम् ॥ १७ ॥
नारद उवाच— कच्चिदर्थाश्च कल्पन्ते धर्मे च रमते मनः ।
सुखानि चाऽनुभूयन्ते मनश्च न विहन्यते ॥ १८ ॥
कच्चिदाचरितां पूर्वैर्नरदेव पितामहैः ।
वर्तसे वृत्तिमक्षुद्रां धर्मार्थसहितां त्रिषु ॥ १९ ॥
कच्चिदर्थेन वा धर्मं धर्मेणाऽर्थमथापि वा ।
उभौ वा प्रीतिसारेण न कामेन प्रबाधसे ॥ २० ॥

होगे मनके समान तेज चालसे उनकी उस सभामें आकर जय आशीषसे धर्मराजकी जयजयकार तथा पूजा की । ( १-१२ )

ऋषिको आते देखकर सब धर्मके जानकार अति नम्र व्यवहार धर्मकुमार ने एकायक अनुजोंके समेत खडे होय प्रीति दर्शाय, शिर झुकाय, प्रणाम कर, पाद्य, अर्घ्य, योग्य आसन गौ, मधुपर्क, रत्नादि सब कामनाओंसे उनकी पूजा की । वह भी युधिष्ठिरसे योग्य पूजा पाय प्रसन्न हुए । वेदपारग महर्षि श्रीनारदजी, पाण्डवोंसे पूजे जाय युधिष्ठिरसे धर्मार्थ-कामयुक्त यह नीचे लिखे प्रश्न किये । (१३-१७)

श्रीनारदजी बोले, महाराज ! तुम्हारा धन सञ्चित और उचित कार्यमें व्ययित तो हो रहा है ? तुम्हारा मन धर्म पर रमता तो है ? तुम्हें सुख तो अनुभव होता है ? और इससे चित्त ऊबता तो नहीं ? हे नरनाथ ! तुम्हारे पूर्वज अच्छी मङ्गली और बुरी प्रजासे जैसे धर्म अर्थकी रीतिसे अच्छा बर्ताव करते थे, तुमभी वैसेही करते तो हो ? अर्थके लिये धर्मकी और धर्मके लिये अर्थकी हानि तो नहीं पहुंचाते ? अथवा हालमें सुन्दरी कामके वशमें हो जाय धर्मार्थ

कच्चिदर्थं च धर्मं च कामं च जयतां वर ।
विभज्य काले कालज्ञः समं वरद सेवसे ॥ २१ ॥
कच्चिद्राजगुणैः षड्भिः सप्तोपायांस्तथाऽनघ ।
बलाबलं तथा सम्यक्चतुर्दश परीक्षसे ॥ २२ ॥
कच्चिदात्मानमन्वीक्ष्य परांश्च जयतां वर ।
तथा संधाय कर्माणि अष्टौ भारत सेवसे ॥ २३॥
कच्चित्प्रकृतयः सप्त न लुप्ता भरतर्षभ ।
आढयास्तथाऽव्यसनिनः स्वनुरक्ताश्च सर्वशः॥२४॥
कच्चिन्न कृतकैर्दूतैर्ये चाऽप्यपरिशंकिताः ।
त्वत्तो वा तव चाऽमात्यैर्भिद्यते मन्त्रितं तथा॥२५॥
मित्रोदासीनशत्रूणां कच्चिद्वेत्सि चिकीर्षितम् ।
कच्चित्संधिं यथाकालं विग्रहं चोपसेवसे ॥ २६॥
कच्चिद्वृत्तिमुदासीने मध्यमे चाऽनुमन्यसे ।
कच्चिदात्मसमा वृद्धाः शुद्धाः संबोधनक्षमाः॥२७ ॥
कुलीनाश्चाऽनुरक्ताश्च कृतास्ते वीर मंत्रिणः ।
विजयो मन्त्रमूलो हि राज्ञो भवति भारत ॥ २८॥

दोनोंको हनते तो नहीं ? हे परोपकारी जय-निहारी कालविहारी युधिष्ठिर! तुम योग्य कालमें भागकर तुल्य रीतिसे धर्म अर्थ कामकी सेवा तो करते हो ? हे अनघ! वक्तृता, प्रगल्भता आदि छः राज-गुण, साम दानादि सात उपाय और बलाबल द्वारा राजाओंके चौदह भांतिके दोषोंको भले प्रकार जानते हो कि नहीं ? ( १८-२२ )

हे जयशील! अपनी और परायी दशाको समझ बूझकर कार्य तो करते हो? और शत्रुओंसे हेल मेलकर कृषि वाणिज्यादि आठ प्रकारके कर्म कर लेते तो हो? हे भरतकुलप्रदीप! तुम्हारी दुर्गनाथादि सप्तविध प्रकृति शत्रुओंसे मोहित होकर अथवा आढ्य बनके व्यसनी तो नहीं बनी ? वे सब भली भांति तुम्हारी प्रेमी तो बनी है? छली, निडर दूतोंसे, तुमसे अथवा तुम्हारे मन्त्रियोंसे तुम्हारी परामर्श प्रकाश तो नहीं होती? शत्रु, मित्र और विरागी जो कुछ करना चाहते है, वह जान तो लेते हो? उचित कालमें सन्धि-विग्रह तो करते हो? उदासीन और मध्यस्थों पर मध्यस्थताकी अवलम्ब तो करते हो? हे वीरवर ! निर्दोष, काज अकाजके समझदार, प्यारे, तथा अपने

कच्चित्सहस्रैर्मूर्खाणामेकं क्रीणासि पण्डितम्।
पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निःश्रेयसं परम् ॥ ३६ ॥
कच्चिद्दुर्गाणि सर्वाणि धनधान्यायुधोदकैः ।
यन्त्रैश्च परिपूर्णानि तथा शिल्पिधनुर्धरैः ॥ ३७ ॥
एकोऽप्यमात्यो मेधावी शूरो दान्तो विचक्षणः।
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् ॥ ३८ ॥
कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च ।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥३९॥
कच्चिद् द्विषामविदितः प्रतिपन्नश्च सर्वदा ।
नित्ययुक्तो रिपून्सर्वान्वीक्षसे रिपुसूदन ॥ ४० ॥
कच्चिद् विनयसंपन्नः कुलपुत्रो बहुश्रुतः ।
अनसूयुरसंकीर्णः सत्कृतस्ते पुरोहितः ॥ ४१ ॥
कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः ।
हुतं च होष्यमाणं च काले वेदयते सदा ॥ ४२ ॥
कच्चिदङ्गेषु निष्णातो ज्योतिषः प्रतिपादकः ।
उत्पातेषु हि सर्वेषु दैवज्ञः कुशलस्तव ॥ ४३ ॥

तो देते है ? सहस्रों मूर्खोंके बदले एक पण्डितको मोल लेते हो कि नहीं? क्योंकि पण्डित लोग बड़ी विपतमेंभी उद्धार करके मङ्गल करते हैं।( ३४–३६ )

तुम्हारे दुर्ग, धन, धान्य, रत्न, अस्त्र, शस्त्र, जल, यन्त्र, दल, शिल्पीगण और चापधारियोंसे भरे पूरे तो हैं. मेधावी, शूर, जितेन्द्रिय और चतुर एकही राजमन्त्रीसे भी राजा वा राजकुमार बड़े श्रीमान हो सकते हैं ; सो ऐसा कोई मन्त्री आपके यहां है ना ? हे शत्रुमर्दन ! तीन तीन गुप्तचरोंसे विपक्षियोंके पुरोहितादि अठारह तीर्थ और निज पक्षके पन्दरह तीर्थ जान तो लेते हो ? शत्रुओंके न जाननेसे सदा सावधान और यत्नवान होकर उनका सब हाल जान तो लेते हो ? विनयी, सुवंशी, बड़े नामी असूयासे रहित और महानुभाव पुरोहितोंका तुम सदा आदर तो करते हो ? ( ३७-४१ )

कोई सरल चित्त विधिदर्शी जन तुम्हारे अग्निहोत्र कार्यमें नियुक्त होकर यह तो जताते हैं, कि कब हवन हुआ और कब करना चाहिये ? जो तुम्हारे ज्योतिष शास्त्रके प्रतिपादक हैं, वह सामुद्रिक शास्त्रके अनुसार अङ्ग परीक्षामें पण्डित, दैवी अभिप्रायोंके जानकार

कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः ।
जघन्याश्च जघन्येषु भृत्याः कर्मसु योजिताः ॥४४॥
अमात्यानुपधातीतान्पितृपैतामहाञ्छुचीन् ।
श्रेष्ठाञ्छ्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु ॥ ४५ ॥
कच्चिन्नोग्रेण दण्डेन भृशमुद्विजसे प्रजाः ।
राष्ट्रं तवाऽनुशासन्ति मन्त्रिणो भरतर्षभ ॥ ४६ ॥
कच्चित्त्वां नाऽवजानन्ति याजकाः पतितं यथा ।
उग्रप्रतिग्रहीतारं कामयानमिव स्त्रियः ॥ ४७ ॥
कच्चिद्धृष्टश्च शूरश्च मतिमान्धृतिमाञ्छुचिः ।
कुलीनश्चाऽनुरक्तश्च दक्षः सेनापतिस्तव ॥ ४८ ॥
कच्चिद्बलस्य ते मुख्याः सर्वयुद्धविशारदाः ।
धृष्टावदाता विक्रान्तास्त्वया सत्कृत्य मानिताः ॥४९॥
कच्चिद्बलस्य भक्तं च वेतनं च यथोचितम् ।
सम्प्राप्तकाले दातव्यं ददासि न विकर्षसि ॥ ५० ॥
कालातिक्रमणादेते भक्तवेतनयोर्भृताः ।
भर्तुः कुर्वन्ति दौर्गत्यात्सोऽनर्थः सुमहान्स्मृतः ॥५१॥
कच्चित्सर्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधानतः ।

और दैवादि विपत्तिके रोकनेमें दक्ष तो है? उत्तम, मध्यम और निकृष्ट नौकर तो रखे गये? कुलकी परम्परासे चले आते हुए, अकपट अमल-चित्त श्रेष्ठ मन्त्रियोंको श्रेष्ठ कार्योंमें नियुक्त तो कर दिया है? तुम्हारे कड़े दण्डसे प्रजा चिढ़ती तो नहीं? मन्त्रीलोग तुम्हारी आज्ञासे राज्य शासन तो करते हैं? याजक लोग पतित जनको और नारियां कड़े स्वभावी स्वेच्छाविहारी पतिका अनादर करती हैं, वैसे मन्त्रीलोग तुम्हारा अनादर तो नहीं करते? (४४—४७)

तुम्हारा सेनापति प्रगल्भ, शूर, मतिमान, धीरजवान, शुचि, सुवंशी, प्यारा और काममें दक्ष तो है! अपने सैनिकोंमें सब युद्धमें दक्ष, प्रगल्भ शुद्धचित्त, पराक्रमी बड़े बड़े जनोंका आदर पूर्वक सम्मान तो करते हो? सदा सेनाओंको पावना अन्न और वेतन ठीक समयपे तो देते हो? काल बिताकर उनको पीड़ा तो नहीं पहुंचाते? क्योंकि उचित समय पर उनको अन्न वेतन न देनेसे वे दुर्गतिसे प्रभुको हानि पहुंचाया करते हैं; इस अनर्थको पण्डितलोग बड़ा अनर्थ

एते देवगणा राजन्कीर्तितास्तेऽनुपूर्वशः ।
यान कीर्तयित्वा मनुजः सर्वपापैः प्रमुच्यते ॥ ४१ ॥
ब्रह्मणो हृदयं भित्त्वा निःसृतो भगवान्भृगुः ।
भृगोः पुत्रः कविर्विद्वाञ्छुक्रः कविसुतो ग्रह ॥ ४२॥
त्रैलोक्यप्राणयात्रार्थं वर्षावर्षे भयाभये ।
स्वयंभुवा नियुक्तः सन्भुवनं परिधावति ॥ ४३ ॥
योगाचार्यो महाबुद्धिर्दैत्यानामभवद् गुरुः ।
सुराणां चाऽपि मेधावी ब्रह्मचारी यतव्रतः ॥ ४४ ॥
तस्मिन्नियुक्ते विधिना योगक्षेमाय पार्थिवे ।
अन्यमुत्पादयामास पुत्रं भृगुरनिन्दितम् ॥ ४५ ॥
च्यवनं दीप्ततपसं धर्मात्मानं यशस्विनम् ।
यः स रोषाच्च्युतो गर्भान्मातुर्मोक्षाय भारत ॥४६॥
आरुषी तु मनोः कन्या तस्य पत्नी मनीषिणः।
और्वस्तस्यां समभवदूरुं भित्त्वा महायशाः ॥ ४७ ॥
महातेजा महावीर्यो बाल एव गुणैर्युतः ।
ऋचीकस्तस्य पुत्रस्तु जमदग्निस्ततोऽभवत् ॥ ४८ ॥

तक यह सब देवोंकी कथा कही। जिनके वर्णनसे मनुष्य सब पापोंसे मुक्त होता है। ( ३६—४१ )

भगवान् भृगु ब्रह्माके हृदयको भेदकर निकले। कविपुत्र कवि स्वयं विद्यामें पण्डित शुक्रने भृगु के वीर्यसे जन्म लिया। वह ब्रह्माजीकी आज्ञासे ग्रहके स्वरूपसे तीनों लोकोंकी प्राणयात्रा निर्वाहके लिये वर्षना और न वर्षना, भयका रहना और न रहना विषयोंपर दृष्टि रखनेके निमित्त नियुक्त होकर भूमण्डलमें विचर रहे हैं। व्रतशील, मेधावी, ब्रह्मचारी, और बुद्धिमान् योगाचार्य शुक्र योगबलसे बृहस्पति और शुक्र यह दो स्वरूप लेकरके देव और असुरोंके गुरु हुए। विधातासे दैत्योंके योगक्षेम-कार्यमें नियुक्त होनेपर भृगुने च्यवन नामक एक दूसरे धर्मात्मा प्रज्वलित तेजधारी यशस्वी, अनिन्दित पुत्रको उत्पन्न किया। हे भारत ! वह क्रोधयुक्त होकर राक्षसके हातसे माताको छुडानेके निमित्त गर्भसे गिरे थे।(४२-४६)

मनीषी मुनि च्यवनने आरुषी नाम्नी मनुजीकी बेटीसे विवाह किया था। अति यशस्वी और्व आरुषीकी जांघको चीरकर निकले। वह बालेपनहीमें सब गुणोंसे भूषित, अति तेजस्वी और बडे वीर्यवान

जमदग्नेस्तु चत्वार आसन्पुत्रा महात्मनः ॥ ४९ ॥
रामस्तेषां जघन्योऽभूदजघन्यैर्गुणैर्युतः ।
सर्वशस्त्रेषु कुशलः क्षत्रियान्तकरो वशी ॥ ५० ॥
और्वस्याऽऽसीत्पुत्रशतं जमदग्निपुरोगमम् ।
तेषां पुत्रसहस्राणि बभूवुर्भुवि विस्तरः ॥ ५१ ॥
द्वौ पुत्रौ ब्रह्मणस्त्वन्यौ ययोस्तिष्ठति लक्षणम् ।
लोके धाता विधाता च यौ स्थितौ मुनिना सह ॥ ५२ ॥
तयोरेव स्वसा देवी लक्ष्मीः पद्मगृहा शुभा ।
तस्यास्तु मानसाः पुत्रास्तुरगा व्योमचारिणः ॥ ५३ ॥
वरुणस्य भार्या या ज्येष्ठा शुक्राद्देवी व्यजायत ।
तस्याः पुत्रं बलं विद्धि सुरां च सुरनन्दिनीम् ॥ ५४ ॥
प्रजानामन्नकामानामन्योन्यपरिभक्षणात् ।
अधर्मस्तत्र संजातः सर्वभूतविनाशकः ॥ ५५ ॥
तस्याऽपि निर्ऋतिर्भार्या नैर्ऋता येन राक्षसाः ।
घोरास्तस्यास्त्रयः पुत्राः पापकर्मरताः सदा ॥ ५६ ॥
भयो महाभयश्चैव मृत्युर्भूतान्तकस्तथा ।
न तस्य भार्या पुत्रो वा कश्चिदस्त्यन्तको हि सः ॥ ५७ ॥

थे। और्वके पुत्र ऋचीक हुए, ऋचीकके पुत्र जमदग्नि थे, महात्मा जमदग्निके चार पुत्र थे, उनमें राम सबोंसे छोटे होने परभी गुणोंके लिये सबोंसे बडे हुए थे, वह जितेन्द्रिय क्षत्रियकुलनाशक और शास्त्रज्ञ थे। और्वके जमदग्नि आदि सौ पुत्र थे। उनके सहस्र पुत्र पृथ्वीमें फैल गये। (४९-५१)

देवी लक्ष्मी उनकी बहिन है; आकाशको उडनवाले घोडे लक्ष्मीजीके मानस-पुत्र है। वरुणकी बडी स्त्री देवीने शुक्रसे जन्म लिया; उन्होंने बल नामक एक पुत्र और सुरा नाम सुरनन्दिनी एक कन्या प्रसव की। पेट भरनेके निमित्त प्रजाओंके एक दूसरेको खानेसे सर्वभूतनाशी अधर्म उत्पन्न हुआ है। उसकी स्त्रीका नाम निर्ऋति

काकीं श्येनीं तथा भासीं धृतराष्ट्रीं तथा शुकीम्।
ताम्रा तु सुषुवे देवी पञ्चैता लोकविश्रुता ॥ ५८ ॥
उलूकान्सुषुवे काकी श्येनी श्येनान्व्यजायत।
भासी भासानजनयद् गृध्रांश्चैव जनाधिप ॥ ५९ ॥
धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्वशः ।
चक्रवाकांश्च भद्रा तु जनयामास सैव तु ॥ ६० ॥
शुकी च जनयामास शुकानेव यशस्विनी ।
कल्याणगुणसंपन्ना सर्वलक्षणपूजिता ॥ ६१ ॥
नव क्रोधवशा नारीः प्रजज्ञे क्रोधसंभवाः ।
मृगी च मृगमन्दा च हरी भद्रमना अपि ॥ ६२ ॥
मातङ्गी त्वथ शार्दूली श्वेता सुरभिरेव च ।
सर्वलक्षणसंपन्ना सुरसा चैव भामिनी ॥ ६३ ॥
अपत्यं तु मृगाः सर्वे मृग्या नरवरोत्तम ।
ऋक्षाश्च मृगमन्दायाः सृमराश्च परंतप ॥ ६४ ॥
ततस्त्वैरावतं नागं जज्ञे भद्रमनाः सुतम् ।
ऐरावतः सुतस्तस्या देवनागो महागजः ॥ ६५ ॥
हर्याश्च हरयोऽपत्यं वानराश्च तरस्विनः ।
गोलाङ्गूलाश्च भद्रं ते हर्याः पुत्रान्प्रचक्षते ॥ ६६ ॥
प्रजज्ञे त्वथ शार्दूली सिंहान्व्याघ्राननेकशः ।

मृत्युके स्त्री पुत्र कोई नहीं थे, क्योंकि वह स्वयंही अन्तक हैं। ( ५२—५७ )

काकी, श्येनी, भासी, धृतराष्ट्री और शुकी, लोकोंमें प्रसिद्ध इन पांच कन्याओंने देवी ताम्राके गर्भसे जन्म लिया। काकीने उल्लुकोंको, श्येनी ने बाजोंको, भासीने मुरगों और गिद्धोंको और भद्रा धृतराष्ट्रीने, हंस, राजहंस और चकवों को प्रसव किया। सर्वलक्षण-धारिणी कल्याणी, गुणशालिनी, यशस्विनी शुकीसे शुक पक्षियोंका जन्म हुआ। (५८-६१)

मृगी, मृगमन्दा, हरी, भद्रमना, मातङ्गी, शार्दूली, श्वेता, सुरभि और सर्वलक्षणवाली भामिनी सुरसा, क्रोधवशा यह नौ नारी क्रोधसे उत्पन्न हुई थीं। हे नरोत्तम ! सब मृगोंने मृगीसे जन्म लिया है; ऋक्ष और स्वमरोंने मृगमन्दासे जन्म लिया है; देवनाग महागज ऐरावत भद्रमनाके गर्भसे उत्पन्न हुए है; और लंगूर बन्दरों और वेगवान् घोडोंने हरीसे जन्म

द्वीपिनश्च महासत्त्वान्सर्वानेव न संशयः ॥ ६७ ॥
मातङ्ग्यपि च मातङ्गानपत्यानि नराधिप ।
दिशां गजं तु श्वेताख्यं श्वेताऽजनयदाशुगम् ॥ ६८ ॥
तथा दुहितरौ राजन्सुरभिर्वै व्यजायत ।
रोहिणीं चैव भद्रं ते गन्धर्वीं तु यशस्विनीम् ॥ ६९ ॥
विमलामपि भद्रं ते अनलामपि भारत ।
रोहिण्यां जज्ञिरे गावो गन्धर्व्यां वाजिनः सुताः ॥ ७० ॥
सप्त पिण्डफलान्वृक्षाननलाऽपि व्यजायत ।
अनलायाः शुकी पुत्री कङ्कस्तु सुरसासुतः ॥ ७१ ॥
अरुणस्य भार्या श्येनी तु वीर्यवन्तौ महाबलौ ।
संपातिं जनयामास वीर्यवन्तं जटायुषं ॥ ७२ ॥
सुरसाऽजनयन्नागान्कद्रूः पुत्रांस्तु पन्नगान् ।
द्वौ पुत्रौ विनतायास्तु विख्यातौ गरुडारुणौ ॥ ७३ ॥
इत्येष सर्वभूतानां महतां मनुजाधिप ।
प्रभवः कीर्तितः सम्यङ्मया मतिमतां वर ॥ ७४ ॥
यं श्रुत्वा पुरुषः सम्यङ्मुक्तो भवति पाप्मनः ।
सर्वज्ञतां च लभते गतिमग्र्यां च विन्दति ॥ ७५ ॥ २६८७

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यामादिपर्वणि संभवपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

लिया है। शार्दूलीने सिंह, व्याघ्र और महासत्त्व सम्पूर्ण चीतोंको जन्म दिया है। (६२-६७)

हे नराधिप! हस्तीगण मातङ्गीके बेटे हैं, श्वेतासे श्वेताक्ष, द्रुतगामी दिग्गज उत्पन्न हुआ था। हे राजन्! कल्याणी यशस्विनी गन्धर्वी और रोहिणी इन दो कन्याओंने सुरभिके गर्भसे जन्म लिया, उनके सिवाय सुरभिसे और दो कन्या थीं; उनके नाम विमला और अनला है। रोहिणीसे गौ और गन्धर्वीसे घोडे उत्पन्न हुए। खजूर, ताड, हिन्ताल, ताली, [illegible] पिण्डफलवाले वृक्ष अनलासे उत्पन्न हुए हैं। उनके सिवाय अनलाकी शुकी नामी एक बेटी थी। सुरसाने कङ्क उपजा। अरुणकी स्त्री श्येनीने सम्पाती और जटायु नामक महाबलवान दो पुत्रोंको प्रसव किया था। और नागगण सुरसासे तथा पन्नगगण कद्रूसे उत्पन्न हुए हैं। गरुड और अरुणको विनताने जन्म दिया था। हे मतिमान मनुजाधिपते! यह

जनमेजय उवाच--देवानां दानवानां च गन्धर्वोरगरक्षसाम् ।
सिंहव्याघ्रमृगाणां च पन्नगानां पतत्रिणाम् ॥ १ ॥
सर्वेषां चैव भूतानां संभवं भगवन्नहम् ।
श्रोतुमिच्छामि तत्त्वेन मानुषेषु महात्मनाम् ॥
जन्म कर्म च भूतानामेतेषामनुपूर्वशः ॥ २ ॥
वैशम्पायन उवाच--मानुषेषु मनुष्येन्द्र संभूता ये दिवौकसः ।
प्रथमं दानवांश्चैव तांस्ते वक्ष्यामि सर्वशः ॥ ३ ॥
विप्रचित्तिरिति ख्यातो य आसीद्दानवर्षभः ।
जरासन्ध इति ख्यातः स आसीन्मनुजर्षभः ॥४॥
दितेः पुत्रस्तु यो राजन्हिरण्यकशिपुः स्मृतः ।
स जज्ञे मानुषे लोके शिशुपालो नरर्षभः ॥ ५ ॥
संह्लाद इति विख्यातः प्रह्लादस्याऽनुजस्तु यः ।
स शल्य इति विख्यातो जज्ञे बाह्लीकपुङ्गवः ॥ ६ ॥
अनुह्लादस्तु तेजस्वी योऽभूत्ख्यातो जघन्यजः ।
धृष्टकेतुरिति ख्यातः स बभूव नरेश्वरः ॥ ७ ॥
यस्तु राजञ्छिबिर्नाम दैतेयः परिकीर्तितः ।
द्रुम इत्यभिविख्यातः स आसीद्भुवि पार्थिवः ॥८॥

सर्वभूतोंकी उत्पत्तिकी कथा कह सुनाई; इसके सुननेसे मनुष्यलोग सर्वज्ञ बन जाते हैं और पापोंसे मुक्त होकर अच्छी गति प्राप्त करते हैं। ( ६८—७५ )

आदिपर्वमें चौसठवां अध्याय समाप्त। [ २६८७ ]

आदिपर्वमें पैंसठवां अध्याय।

जनमेजय बोले, कि भगवन् ! देव, दानव, गन्धर्व, उरग, राक्षस, सिंह, व्याघ्र, मृग, पन्नग, पक्षी और महात्मा मानवोंके जन्म कर्मादि सम्पूर्ण आद्योपान्त सुनने चाहता हूं। श्रीवैशम्पायन जी बोले, कि हे मनुष्येन्द्र ! जिन सब देवता और दानवोंने मानवोंके स्वरूपमें जन्म लिया था, पहिले उनकी कथा कहता हूं। ( १—३ )

विप्रचित्ति नामक प्रख्यात दानवराज जरासन्ध नामसे प्रसिद्ध राजा हुआ था। हे नरनाथ ! हिरण्यकशिपु नामक दितिके पुत्रने शिशुपाल होकर नरयोनिमें जन्म लिया था। प्रह्लादका छोटा भाई प्रसिद्ध संह्लाद शल्य नामसे प्रख्यात होकरके बाह्लीकों में श्रेष्ठ हुआ था। प्रह्लादका सबसे छोटा भाई प्रसिद्ध तेजस्वी अनुह्लाद धृष्टकेतु नामक राजा हुआ था। हे राजन् !

बाष्कलो नाम यस्तेषामासीदसुरसत्तमः ।
भगदत्त इति ख्यातः स जज्ञे पुरुषर्षभः ॥ ९ ॥
अयःशिरा अश्वशिरा अश्वशङ्कुश्च वीर्यवान् ।
तथा गगनमूर्धा च वेगवांश्चात्र पञ्चमः ॥ १० ॥
पञ्चैते जज्ञिरे राजन्वीर्यवन्तो महासुराः ।
केकयेषु महात्मानः पार्थिवर्षभसत्तमाः ॥ ११ ॥
केतुमानिति विख्यातो यस्ततोऽन्यः प्रतापवान् ।
अमितौजा इति ख्यातः सोग्रकर्मा नराधिपः ॥ १२ ॥
स्वर्भानुरिति विख्यातः श्रीमान्यस्तु महासुरः ।
उग्रसेन इति ख्यात उग्रकर्मा नराधिपः ॥ १३ ॥
यस्त्वश्व इति विख्यातः श्रीमानासीन्महासुरः ।
अशोको नाम राजाऽभून्महावीर्योऽपराजितः ॥ १४ ॥
तस्मादवरजो यस्तु राजन्नश्वपतिः स्मृतः ।
दैतेयः सोऽभवद्राजा हार्दिक्यो मनुजर्षभः ॥ १५ ॥
वृषपर्वेति विख्यातः श्रीमान्यस्तु महासुरः ।
दीर्घप्रज्ञ इति ख्यातः पृथिव्यां सोऽभवन्नृपः ॥ १६ ॥
अजकस्त्ववरो राजन्य आसीद्वृषपर्वणः ।
स शाल्व इति विख्यातः पृथिव्यामभवन्नृपः ॥ १७ ॥

शिबि नामक दैत्य द्रुम नामक प्रसिद्ध राजा हुआ था । ( ४–८ )

हे पुरुषश्रेष्ठ ! असुरश्रेष्ठ बाष्कल मानवयोनिमें जन्म लेकर भगदत्त नामसे प्रसिद्ध हुआ था । अयःशिरा, अश्वशिरा, अश्वशंकु, गगनमूर्धा, और वेगवान्, इन पाँच वीर्यवान् महात्मा महासुरोंने केकय देशमें श्रेष्ठ भूपति होकर जन्म लिया था । प्रख्यात प्रतापी केतुमान् अमितौजा नामक प्रसिद्ध नरेश हुआ था । स्वर्भानु नामसे प्रसिद्ध श्रीमान् महासुर, उग्रसेन नामक उग्रकर्मा राजा होकर प्रसिद्ध हुआ था । श्रीमान् महासुर अश्वने अशोक नामक महादुर्जय नरेश होकर जन्म लिया था । ( ९—१४ )

अश्वका छोटा भाई दैत्य अश्वपति, हार्दिक्य नामक महीपाल हुआ था । श्रीमान् महासुर वृषपर्वाने दीर्घप्रज्ञ नामसे प्रख्यात राजा होकर जन्म लिया । वृषपर्वाका छोटा भाई अजक शाल्व नामक पृथ्वीनाथ हुआ । श्रीमान् महासुर अश्वग्रीवने रोचमान नामक नरेश होकर जन्म

अश्वग्रीव इति ख्यातः सत्त्ववान्यो महासुरः।
रोचमान इति ख्यातः पृथिव्यां सोऽभवन्नृपः ॥ १८॥
सूक्ष्मस्तु मतिमान्राजन्कीर्तिमान्यः प्रकीर्तितः ।
बृहद्रथ इति ख्यातः क्षितावासीत्स पार्थिवः॥ १९॥
तुहुण्ड इति विख्यातो य आसीदसुरोत्तमः।
सेनाबिन्दुरिति ख्यातः स बभूव नराधिपः॥ २०॥
इषुपान्नाम यस्तेषामसुराणां बलाधिकः ।
नग्नजिन्नाम राजाऽऽसीद्भुवि विख्यातविक्रमः॥ २१॥
एकचक्र इति ख्यात आसीद्यस्तु महासुरः ।
प्रतिविन्ध्य इति ख्यातो बभूव प्रथितः क्षितौ॥ २२॥
विरूपाक्षस्तु दैतेयश्चित्रयोधी महासुरः ।
चित्रधर्मेति विख्यातः क्षितावासीत्स पार्थिवः॥ २३ ॥
हरस्त्वरिहरो वीर आसीद्यो दानवोत्तमः ।
सुबाहुरिति विख्यातः श्रीमानासीत्स पार्थिवः ॥२४॥
अहरस्तु महातेजाः शत्रुपक्षक्षयंकरः ।
बाह्लीको नाम राजा स बभूव प्रथितः क्षितौ ॥२५॥
निचन्द्रश्चन्द्रवक्त्रस्तु य आसीदसुरोत्तमः ।
मुञ्जकेश इति ख्यातः श्रीमानासीत्स पार्थिवः॥ २६॥
निकुम्भस्त्वजितः संख्ये महामतिरजायत ।

लिया; कीर्तिशाली मतिमान् सूक्ष्म नामक दैत्यने बृहद्रथ नामक प्रख्यात महीपति होकर जन्म लिया था। ( १८—१९ )

असुरराज तुहुण्ड सेनाबिन्दु नामक प्रशंसित भूपालके स्वरूपमें अवतीर्ण हुआ। असुरोंमें अति बलवान् इषुपादने नग्नजित् नामक प्रख्यात विक्रमी राजा होकर जन्म लिया। प्रसिद्ध महासुर एकचक्र पृथ्वीमें प्रतिविन्ध्य नामक प्रशंसित पृथ्वीपति हुआ था। अद्भुत योद्धा महासुर दैत्य विरूपाक्षने क्षितिमण्डलमें चित्रवर्मा नामक प्रख्यात क्षितिपति होकर जन्म लिया। शत्रुनाशी वीर दैत्यवर हर, श्रीमान् प्रख्यात अवनीपति सुबाहु होकर अवतीर्ण हुआ था। ( २०--२४ )

विपक्षपक्ष-क्षयकारी महातेजा अहरने भूमण्डलमें बाह्लीक नामक प्रशंसित राजा होकर जन्म लिया। असुरोत्तम चन्द्रानन निचन्द्र महीपति श्रीमान् मुञ्जकेशके स्वरूपमें अवतीर्ण हुआ था। लड़ाईमें

भूमौ भूमिपतिश्रेष्ठो देवाधिप इति श्रुतः ॥२७॥
शरभो नाम यस्तेषां दैतेयानां महासुरः ।
पौरवो नाम राजर्षिः स बभूव नरोत्तम ॥ २८ ॥
कुपटस्तु महावीर्यः श्रीमान्राजन्महासुरः ।
सुपार्श्व इति विख्यातः क्षितौ जज्ञे महीपतिः ॥२९॥
कपटस्तु राजन्राजर्षिः क्षितौ जज्ञे महासुरः ।
पार्वतेय इति ख्यातः काञ्चनाचलसंनिभः ॥ ३० ॥
द्वितीयः शलभस्तेषामसुराणां बभूव ह ।
प्रह्लादो नाम बाह्लीकः स बभूव नराधिपः ॥ ३१ ॥
चन्द्रस्तु दितिजश्रेष्ठो लोके ताराधिपोपमः ।
चन्द्रवर्मेति विख्यातः काम्बोजानां नराधिपः ॥३२॥
अर्क इत्यभिविख्यातो यस्तु दानवपुङ्गवः ।
ऋषिको नाम राजर्षिर्बभूव नृपसत्तमः ॥ ३३ ॥
मृतपा इति विख्यातो य आसीदसुरोत्तमः ।
पश्चिमानूपकं विद्धि तं नृपं नृपसत्तम ॥ ३४ ॥
गविष्ठस्तु महातेजा यः प्रख्यातो महासुरः ।
द्रुमसेन इति ख्यातः पृथिव्यां सोऽभवन्नृपः ॥३५॥

मयूर इति विख्यातः श्रीमान्यस्तु महासुरः ।
स विश्व इति विख्यातो बभूव पृथिवीपतिः ॥ ३६ ॥
सुपर्ण इति विख्यातस्तस्मादवरजस्तु यः ।
कालकीर्तिरिति ख्यातः पृथिव्यां सोऽभवन्नृपः ३७ ॥
चन्द्रहन्तेति यस्तेषां कीर्तितः प्रवरोऽसुरः ।
शुनको नाम राजर्षिः स बभूव नराधिपः ॥ ३८ ॥
विनाशनस्तु चन्द्रस्य य आख्यातो महासुरः ।
जानकिर्नाम विख्यातः सोऽभवन्मनुजाधिपः ॥३९॥
दीर्घजिह्वस्तु कौरव्य य उक्तो दानवर्षभः ।
काशिराजः स विख्यातः पृथिव्यां पृथिवीपते ॥४०॥
ग्रहं तु सुषुवे यं तु सिंहिकाऽर्केन्दुमर्दनम् ।
स क्राथ इति विख्यातो बभूव मनुजाधिप ॥४१॥
दनायुषस्तु पुत्राणां चतुर्णां प्रवरोऽसुरः ।
विक्षरो नाम तेजस्वी वसुमित्रो नृपः स्मृतः॥ ४२ ॥
द्वितीयो विक्षराद्यस्तु नराधिप महासुरः ।
पाण्ड्यराष्ट्राधिप इति विख्यातः सोऽभवन्नृपः॥४३॥
बली वीर इति ख्यातो यस्त्वासीदसुरोत्तमः ।
पौण्ड्रमात्स्यक इत्येवं बभूव स नराधिपः ॥ ४४ ॥
वृत्र इत्यभिविख्यातो यस्तु राजन्महासुरः ।
मणिमान्नाम राजर्षिः स बभूव नराधिपः ॥ ४५ ॥

प्रसिद्ध सुपर्ण कालकीर्त्ति नामसे धरतीमें अवतीर्ण हुआ। प्रधानोंमें प्रशंसित असुर चन्द्रहन्ता शुनक नाम राजर्षि हुआ। महासुर चन्द्रविनाशनने जानकि नामक प्रख्यात राजा होकर जन्म लिया। हे कुरुवंशश्रेष्ठ! दानवश्रेष्ठ दीर्घजिह्व काशीराज नामक प्रसिद्ध राजा हुआ। चन्द्र-सूर्यके मथनेहारा जो ग्रह सिंहिकामें प्रसव किया गया था, उस ग्रहने क्राथ नामक प्रसिद्ध भूप होकर जन्म लिया था। दनायुके चार पुत्रोंमें बड़ा पुत्र असुर तेजस्वी विक्षर वसुमित्र नामक राजा हुआ। (३५–४२)

हे नराधिप! उसके दूसरे पुत्र महासुरने पाण्ड्य देशमें सुप्रसिद्ध राजा होकर जन्म लिया। असुरोत्तम प्रशंसित बली पौण्ड्रमत्स्यक नामक भूप हुआ। हे राजन्! महासुर प्रख्यात वृत्रने मणिमान् नामक

क्रोधहन्तेति यस्तस्य बभूवाऽवरजोऽसुरः ।
दण्ड इत्यभिविख्यातः स आसीन्नृपतिः क्षितौ ॥४६॥
क्रोधवर्धन इत्येवं यस्त्वन्यः परिकीर्तितः ।
दण्डधार इति ख्यातः सोऽभवन्मनुजर्षभः ॥ ४७ ॥
कालेयानां तु ये पुत्रास्तेषामष्टौ नराधिपाः ।
जज्ञिरे राजशार्दूल शार्दूलसमविक्रमाः ॥ ४८ ॥
मगधेषु जयत्सेनस्तेषामासीत्स पार्थिवः ।
अष्टानां प्रवरस्तेषां कालेयानां महासुरः ॥ ४९ ॥
द्वितीयस्तु ततस्तेषां श्रीमान्हरिहयोपमः ।
अपराजित इत्येवं स बभूव नराधिपः ॥५० ॥
तृतीयस्तु महातेजा महामायो महासुरः ।
निषादाधिपतिर्जज्ञे भुवि भीमपराक्रमः ॥५१॥
तेषामन्यतमो यस्तु चतुर्थः परिकीर्तितः ।
श्रेणिमानिति विख्यातः क्षितौ राजर्षिसत्तमः ॥५२॥
पञ्चमस्त्वभवत्तेषां प्रवरो यो महासुरः ।
महौजा इति विख्यातो बभूवेह परंतपः ॥५३॥
षष्ठस्तु मतिमान्यो वै तेषामासीन्महासुरः ।
अभीरुरिति विख्यातः क्षितौ राजर्षिसत्तमः ॥५४॥
समुद्रसेनस्तु नृपस्तेषामेवाऽभवद्गुणात् ।

विश्रुतः सागरान्तायां क्षितौ धर्मार्थतत्त्ववित् ५५॥
बृहन्नामाऽष्टमस्तेषां कालेयानां नराधिप ।
बभूव राजा धर्मात्मा सर्वभूतहिते रतः ॥ ५६ ॥
कुक्षिस्तु राजन्विख्यातो दानवानां महाबलः।
पार्वतीय इति ख्यातः काञ्चनाचलसन्निभः॥ ५७ ॥
क्रथनश्च महावीर्यः श्रीमान्राजा महासुरः ।
सूर्याक्ष इति विख्यातः क्षितौ जज्ञे महीपतिः॥ ५८ ॥
असुराणां तु यः सूर्यः श्रीमांश्चैव महासुरः ।
दरदो नाम बाह्लीको वरः सर्वमहीक्षिताम्॥ ५९ ॥
गणःक्रोधवशो नाम यस्ते राजन्प्रकीर्तितः ।
ततः संजज्ञिरे वीराः क्षिताविह नराधिपाः॥ ६० ॥
मद्रकः कर्णवेष्टश्च सिद्धार्थः कीटकस्तथा ।
सुवीरश्च सुबाहुश्च महावीरोऽथ बाह्लिकः ॥ ६१ ॥
क्रथो विचित्रः सुरथः श्रीमान्नीलश्च भूमिपः ।
चीरवासाश्च कौरव्य भूमिपालश्च नामतः ॥ ६२ ॥
दन्तवक्त्रश्च नामाऽऽसीद्दुर्जयश्चैव दानवः ।
रुक्मी च नृपशार्दूलो राजा च जनमेजयः ॥ ६३ ॥
आषाढो वायुवेगश्च भूरितेजास्तथैव च ।
एकलव्यः सुमित्रश्च वाटधानोऽथ गोमुखः ॥ ६४ ॥

जाननेवाले नरेश होकर जन्म लिया। हे नराधिप! कालेओंमेंसे आठवां असुर बृहत नामक सर्वभूतोंके हित करनेवाला राजा हुआ। ( ४८—५६ )

हे राजन् ! दानवोंमें सुवर्णके पर्वतवत् महाबली प्रसिद्ध कुक्षि पार्वतीय नामक प्रसिद्ध क्षितीश हुआ। हे राजन् ! अति वीर्यवान महासुर श्रीमान् क्रथनने पृथ्वी-पर सूर्याक्ष नामक प्रसिद्ध क्षितिपति होकर जन्म लिया। असुरोंमें श्रीमान् महासुर सूर्यने सर्व भूतोंमें श्रेष्ठ बाह्लीकराज दरद होकर जन्म लिया। हे राजन्! क्रोधवश नामक जिन गणोंकी कथा कह चुका हूं, उन्होंने धरतीमें सूरवीर पृथ्वीनाथ होकर जन्म लिया। ( ५७–६० )

मद्रक, कर्णवेष्ट, सिद्धार्थ, कीटक, सुवीर, सुबाहु, महावीर बाह्लीक, क्रथ, विचित्र, सुरथ, भूमिपति, श्रीमान् नील, चीरवासा, भूमिपाल, दन्तवक्र, दुर्जय, नृपसिंह, रुक्मी, जनमेजय, आषाढ,

कारूषकाश्च राजानः क्षेमधूर्तिस्तथैव च ।
अनायुरुद्धहश्चैव बृहत्सेनस्तथैव च ॥ ६५ ॥
क्षेमोग्रतीर्थः कुहरः कलिङ्गेषु नराधिपः ।
मतिमांश्च मनुष्येन्द्र ईश्वरश्चेति विश्रुतः ॥ ६६ ॥
गणात्क्रोधवशादेवं राजपूगोऽभवत्क्षितौ ।
जातः पुरा महाभागो महाकीर्तिर्महाबलः ॥ ६७ ॥
कालनेमिरिति ख्यातो दानवानां महाबलः ।
स कंस इति विख्यात उग्रसेनसुतो बली ॥ ६८ ॥
यस्त्वासीद्देवको नाम देवराजसमद्युतिः ।
स गन्धर्वपतिर्मुख्यः क्षितौ जज्ञे नराधिपः ॥ ६९ ॥
बृहस्पतेर्बृहत्कीर्तेर्देवर्षेर्विद्धि भारत ।
अंशाद्द्रोणं समुत्पन्नं भारद्वाजमयोनिजम् ॥ ७० ॥
धन्विनां नृपशार्दूल यः स सर्वास्त्रवित्तमः ।
महाकीर्तिर्महातेजाः स जज्ञे मनुजेश्वर ॥ ७१ ॥
धनुर्वेदे च वेदे च यं तं वेदविदो विदुः ।
वरिष्ठं चित्रकर्माणं द्रोणं स्वकुलवर्धनम् ॥ ७२ ॥
महादेवान्तकाभ्यां च कामक्रोधाच्च भारत ।

एकत्वमुपपन्नानां जज्ञे शूरः परंतपः ॥ ७३ ॥
अश्वत्थामा महावीर्यः शत्रुपक्षभयावहः ।
वीरः कमलपत्राक्ष क्षितावासीन्नराधिप ॥ ७४ ॥
जज्ञिरे वसवस्त्वष्टौ गङ्गायां शन्तनोः सुताः ।
वसिष्ठस्य च शापेन नियोगाद्वासवस्य च ॥ ७५ ॥
तेषामवरजो भीष्मः कुरूणामभयंकरः ।
मतिमान्वेदविद्वाग्मी शत्रुपक्षक्षयंकरः ॥ ७६ ॥
जामदग्न्येन रामेण सर्वास्त्रविदुषां वरः ।
योऽयुध्यत महातेजा भार्गवेण महात्मना ॥ ७७ ॥
यस्तु राजन्कृपो नाम ब्रह्मर्षिरभवत्क्षितौ ।
रुद्राणां तं गणाद्विद्धि संभूतमतिपौरुषम् ॥ ७८ ॥
शकुनिर्नाम यस्त्वासीद्राजा लोके महारथः ।
द्वापरं विद्धि तं राजन्संभूतमरिमर्दनम् ॥ ७९ ॥
सात्यकिः सत्यसन्धश्च योऽसौ वृष्णिकुलोद्वहः ।
पक्षात्स जज्ञे मरुतां देवानामरिमर्दनः ॥ ८० ॥
द्रुपदश्चैव राजर्षिस्तत एवाऽभवद्गणात् ।
मानुषे नृप लोकेऽस्मिन्सर्वशस्त्रभृतां वर ॥ ८१ ॥
ततश्च कृतवर्माणं विद्धि राजञ्जनाधिपम् ।

एक होनेसे उन चारोंके अंशसे शत्रुपक्षनाशी, शूरवीर, शत्रुमथनेहारे, पद्मपत्राक्ष, अति वीर्य वान् अश्वत्थामा उत्पन्न हुए। वसिष्ठके शाप और इन्द्रके नियोगके कारण, अष्टवसुओंने शान्तनुके वीर्य और गंगाजीके गर्भमें जन्म लिया; उनमें भीष्म सबोंसे छोटे हैं; यह मतिमान वेदज्ञ, सद्वक्ता, शत्रुकुलनाशी और कौरवोंके दाढस देनेवाले थे; सब अस्त्रोंके व्यवहारमें दक्ष महातेजा यह महात्मा जमदग्निके पुत्र महानुभाव, भार्गव, परशुरामसे लडे थे। ( ७३–७७ )

हे राजन् ! अति पौरुषयुक्त ब्रह्मर्षि कृप रुद्रोंके अंशसे पृथ्वीमें अवतीर्ण हुए। हे राजन् द्वापर अंशसे शत्रुपीडक महारथी शकुनिने जन्म लिया था; वृष्णिवंशश्रेष्ठ शत्रुमथनेहारे, सत्यशील, सात्यकि मरुद्गणसे उत्पन्न हुए थे। हे नृप ! अस्त्रधारियोंमें श्रेष्ठ राजर्षि द्रुपद उन्हीं देवोंसे भूलोकमें अवतीर्ण हुए थे। हे राजन्! अनुपम कर्म करने वाले, क्षत्रियकुलमें श्रेष्ठ भूपाल कृतवर्माभी उन्हीं देवोंसे उत्पन्न

तमप्रतिमकर्माणं क्षत्रियर्षभसत्तमम् ॥ ८२ ॥
मरुतां तु गणाद्विद्धि संजातमरिमर्दनम् ।
विराटं नाम राजानं परराष्ट्रप्रतापनम् ॥ ८३ ॥
अरिष्टायास्तु यः पुत्रो हंस इत्यभिविश्रुतः ।
स गन्धर्वपतिर्जज्ञे कुरुवंशविवर्धनः ॥ ८४ ॥
धृतराष्ट्र इति ख्यातः कृष्णद्वैपायनात्मजः ।
दीर्घबाहुर्महातेजाः प्रज्ञाचक्षुर्नराधिपः ॥ ८५ ॥
मातुर्दोषादृषेः कोपादन्ध एव व्यजायत ॥ ८६ ॥
तस्यैवाऽवरजो भ्राता महासत्त्वो महाबलः ।
स पाण्डुरिति विख्यातः सत्यधर्मरतः शुचिः ॥ ८७ ॥
अत्रेस्तु सुमहाभागं पुत्रं पुत्रवतां वरम् ।
विदुरं विद्धि तं लोके जातं बुद्धिमतां वरम् ॥ ८८ ॥
कलेरंशस्तु संजज्ञे भुवि दुर्योधनो नृपः ।
दुर्बुद्धिर्दुर्मतिश्चैव कुरूणामयशस्करः ॥ ८९ ॥
जगतो यस्तु सर्वस्य विद्विष्टः कलिपूरुषः ।
यः सर्वां घातयामास पृथिवीं पृथिवीपतिः ॥ ९० ॥

एकत्वमुपपन्नानां जज्ञे शूरः परंतपः ॥ ७३ ॥
अश्वत्थामा महावीर्यः शत्रुपक्षभयावहः ।
वीरः कमलपत्राक्ष क्षितावासीन्नराधिप ॥ ७४ ॥
जज्ञिरे वसवस्त्वष्टौ गङ्गायां शन्तनोः सुताः ।
वसिष्ठस्य च शापेन नियोगाद्वासवस्य च ॥ ७५ ॥
तेषामवरजो भीष्मः कुरूणामभयंकरः ।
मतिमान्वेदविद्वाग्मी शत्रुपक्षक्षयंकरः ॥ ७६ ॥
जामदग्न्येन रामेण सर्वास्त्रविदुषां वरः ।
योऽयुध्यत महातेजा भार्गवेण महात्मना ॥ ७७ ॥
यस्तु राजन्कृपो नाम ब्रह्मर्षिरभवत्क्षितौ ।
रुद्राणां तु गणाद्विद्धि संभूतमतिपौरुषम् ॥ ७८ ॥
शकुनिर्नाम यस्त्वासीद्राजा लोके महारथः ।
द्वापरं विद्धि तं राजन्संभूतमरिमर्दनम् ॥ ७९ ॥
सात्यकिः सत्यसन्धश्च योऽसौ वृष्णिकुलोद्वहः ।
पक्षात्स जज्ञे मरुतां देवानामरिमर्दनः ॥ ८० ॥
द्रुपदश्चैव राजर्षिस्तत एवाऽभवद्गणात् ।
मानुषे नृप लोकेऽस्मिन्सर्वशस्त्रभृतां वरः ॥ ८१ ॥
ततश्च कृतवर्माणं विद्धि राजञ्जनाधिपम् ।

एक होनेसे उन चारोंके अंशसे शत्रुपक्षनाशी, शूरवीर, शत्रुमथनहारे, पद्मपत्राक्ष, अति वीर्यवान् अश्वत्थामा उत्पन्न हुए। वसिष्ठके शाप और इन्द्रके नियोगके कारण, अष्टवसुओंने शान्तनुके वीर्य और गंगाजीके गर्भसे जन्म लिया; उनमें भीष्म सबोंमे छोटे है; यह मतिमान् वेदज्ञ, सद्वक्ता, शत्रुकुलनाशी और कौरवोंके दाढस देनेवाले थे; सब अस्त्रोंके व्यवहारमे दक्ष महातेजा यह महात्मा जमदग्निके पुत्र महानुभाव, भार्गव, परशुरामसे लडे थे। (७३--७७)

हे राजन् ! अति पौरुषयुक्त ब्रह्मर्षि कृप रुद्रोंके अंशसे पृथ्वीमे अवतीर्ण हुए। हे राजन् द्वापर अंशसे शत्रुपीडक महारथी शकुनिने जन्म लिया था; वृष्णिवंशश्रेष्ठ शत्रुमथनहारे, सत्यशील, सात्यकि मरुद्गणसे उत्पन्न हुए थे। हे नृप ! अस्त्रधारियोंमे श्रेष्ठ राजर्षि द्रुपद उन्ही देवोंसे भूलोकमे अवतीर्ण हुए थे। हे राजन्! अनुपम कर्म करनेवाले, क्षत्रियकुलमे श्रेष्ठ भूपाल कृतवर्माभी उन्ही देवोंसे उत्पन्न

तमप्रतिमकर्माणं क्षत्रियर्षभसत्तमम् ॥ ८२ ॥
मरुतां तु गणाद्विद्धि संजातमरिमर्दनम् ।
विराटं नाम राजानं परराष्ट्रप्रतापनम् ॥ ८३ ॥
अरिष्टायास्तु यः पुत्रो हंस इत्यभिविश्रुतः ।
स गन्धर्वपतिर्जज्ञे कुरुवंशविवर्धनः ॥ ८४ ॥
धृतराष्ट्र इति ख्यातः कृष्णद्वैपायनात्मजः ।
दीर्घबाहुर्महातेजाः प्रज्ञाचक्षुर्नराधिपः ॥ ८५ ॥
मातुर्दोषादृषेः कोपादन्ध एव व्यजायत ॥ ८६ ॥
तस्यैवाऽवरजो भ्राता महासत्त्वो महाबलः ।
स पाण्डुरिति विख्यातः सत्यधर्मरतः शुचिः ॥ ८७ ॥
अत्रेस्तु सुमहाभागं पुत्रं पुत्रवतां वरम् ।
विदुरं विद्धि तं लोके जातं बुद्धिमतां वरम् ॥ ८८ ॥
कलेरंशस्तु संजज्ञे भुवि दुर्योधनो नृपः ।
दुर्बुद्धिर्दुर्मतिश्चैव कुरूणामयशस्करः ॥ ८९ ॥
जगतो यस्तु सर्वस्य विद्विष्टः कलिपूरुषः ।
यः सर्वां घातयामास पृथिवीं पृथिवीपते ॥ ९० ॥

हुए। ( ७८–८२ )

विपक्ष राज्यको पीडा पहुंचाने वाले, शत्रुमथनेहारे नरेश विराटभी उन्हीं मरुद्गणके अंशसे अवतीर्ण हुए थे। अरिष्टाके पुत्र प्रख्यात गन्धर्वनाथ हंसने कृष्णद्वैपायननन्दन कुरुवंश बढानेवाले धृतराष्ट्रके स्वरूपमें जन्म लिया। वह दीर्घभुज महातेजस्वी बुद्धिमान् नरेश माताके दोष और ऋषिके क्रोधसे जन्मसे अन्धे हुए थे। उनके और एक भाई थे, उनका नाम पाण्डु था; वह सत्यधर्म में रत, शुद्धाचारी महासत्त्वयुक्त और महाबली थे। ( ८३—८७ )

पुत्रवान् पुरुषोंमें प्रधान जो अत्रिके पुत्र महाभाग धर्म हैं, अति बुद्धिमान महामति विदुर उन धर्मके अवतार होकर उत्पन्न हुए थे। हे पृथ्वीपते! जो कलि पुरुष सबोंका द्वेष करनेवाला तथा भूमण्डलमें सर्वनाशका कारण हुआ और जिस मन्दचित्तने भूतनाशी बडे भारी विद्वेषके अग्निको प्रज्वलित किया था, वह कुरुकुलमें कलह लगानेवाला मन्दमति दुर्योधन कलिके अंशसे उत्पन्न हुआ। पौलस्त्योंने दुर्योधनके भाई बनकर मनुष्ययोनिमें जन्म लिया। हे नरश्रेष्ठ! दुःशासनादि [illegible]

उद्दीपितं येन वैरं भूतान्तकरणं महत् ।
पौलस्त्या भ्रातरश्चाऽस्य जज्ञिरे मनुजेष्विह ॥ ९१ ॥
शतं दुःशासनादीनां सर्वेषां क्रूरकर्मणाम् ।
दुर्मुखो दुःसहश्चैव ये चाऽन्ये नाऽनुकीर्तिताः ॥ ९२ ॥
दुर्योधनसहायास्ते पौलस्त्या भरतर्षभ ।
वैश्यापुत्रो युयुत्सुश्च धार्तराष्ट्रः शताधिकः ॥ ९३ ॥
जनमेजय उवाच—ज्येष्ठानुज्येष्ठतामेषां नामधेयानि वा विभो ।
धृतराष्ट्रस्य पुत्राणामानुपूर्व्येण कीर्तय ॥ ९४ ॥
वैशम्पायन उवाच—दुर्योधनो युयुत्सुश्च राजन्दुःशासनस्तथा ।
दुःसहो दुःशलश्चैव दुर्मुखश्च तथा परः ॥ ९५ ॥
विविंशतिर्विकर्णश्च जलसन्धः सुलोचनः ।
विन्दानुविन्दौ दुर्धर्षः सुबाहुर्दुष्प्रधर्षणः ॥ ९६ ॥
दुर्मर्षणो दुर्मुखश्च दुष्कर्णः कर्ण एव च ।
चित्रोपचित्रौ चित्राक्षश्चारुचित्राङ्गदश्च ह ॥ ९७ ॥
दुर्मदो दुष्प्रहर्षश्च विवित्सुर्विकटः समः ।
ऊर्णनाभः पद्मनाभस्तथा नन्दोपनन्दकौ ॥ ९८ ॥
सेनापतिः सुषेणश्च कुण्डोदरमहोदरौ ।
चित्रबाहुश्चित्रवर्मा सुवर्मा दुर्विरोचनः ॥ ९९ ॥
अयोबाहुर्महाबाहुश्चित्रचापसुकुण्डलौ ।
भीमवेगो भीमबलो बलाकी भीमविक्रमः ॥ १०० ॥

मे लगे हुए सौ भाईयोंमेसे दुर्मुख दुःसह आदि जिनके नाम कहे गये और जिनके नही कहे गये है तथा धृतराष्ट्रके वैश्यापुत्र युयुत्सु नामक सौसे अधिक जो और एक पुत्र था, वे सभी पौलस्त्योंके अंश और दुर्योधनके सहायक थे। ( ८८–९३ )

जनमेजय बोले, कि हे विभो! धृतराष्ट्र के पुत्रोंके नाम बडे छोटेके क्रमसे आद्योपान्त कहिये। श्रीवैशम्पायनजी बोले, कि हे राजन्! दुर्योधन, युयुत्सु, दुःशासन, दुःसह, दुःशल, दुर्मुख, विविंशति, विकर्ण जलसन्ध, सुलोचन, विन्द, अनुविन्द, दुर्धर्ष, सुबाहु, दुष्प्रधर्षण, दुर्मर्षण, दुर्मुख, दुष्कर्ण, कर्ण, चित्र, उपचित्र, चित्राक्ष, चारु, चित्रांगद, दुर्मद, दुष्प्रहर्ष, विवित्सु, विकट, सम, ऊर्णनाभ, पद्मनाभ, नन्द, उपनन्दक, सेनापति, सुषेण कुण्डोदर, महोदर, चित्रबाहु, चित्रवर्मा, सुवर्मा, दुर्वि-

उग्रायुधो भीमशरः कनकायुर्दृढायुधः ।
दृढवर्मा दृढक्षत्रः सोमकीर्तिरनूदरः ॥ १०१ ॥
जरासन्धो दृढसन्धः सत्यसन्धः सहस्रवाक् ।
उग्रश्रवा उग्रसेनः क्षेममूर्तिस्तथैव च ॥ १०२ ॥
अपराजितकः पण्डितको विशालाक्षो दुराधनः ।
दृढहस्तः सुहस्तश्च वातवेगसुवर्चसौ ॥ १०३ ॥
आदित्यकेतुर्बह्वाशी नागदत्तानुयायिनौ ।
कवची निषङ्गी दण्डी दण्डधारो धनुर्ग्रहः ॥ १०४ ॥
उग्रो भीमरथो वीरो वीरबाहुरलोलुपः ।
अभयो रौद्रकर्मा च तथा दृढरथश्च यः ॥ १०५ ॥
अनाधृष्यः कुण्डभेदी विरावी दीर्घलोचनः ।
दीर्घबाहुर्महाबाहुर्व्यूढोरुः कनकाङ्गदः ॥ १०६ ॥
कुण्डजश्चित्रकश्चैव दुःशला च शताधिका ।
वैश्यापुत्रो युयुत्सुश्च धार्तराष्ट्रः शताधिकः ॥ १०७ ॥
एतदेकशतं राजन्कन्या चैका प्रकीर्तिता ।
नामधेयानुपूर्व्या च ज्येष्ठानुज्येष्ठतां विदुः ॥ १०८ ॥
सर्वे त्वतिरथाः शूराः सर्वे युद्धविशारदाः ।
सर्वे वेदविदश्चैव राजशास्त्रे च पारगाः ॥ १०९ ॥

लोचन, अयोबाहु, महाबाहु, चित्रचाप, सुकुण्डल, भीमवेग, भीमबल, बलाकी, भीमविक्रम, उग्रायुध, भीमशर, कनकायु, दृढायुध, दृढवर्मा, दृढक्षत्र, सोमकीर्ति, अनूदर, जरासन्ध, दृढसन्ध, सत्यसन्ध, सहस्रवाक्, उग्रश्रवा, उग्रसेन, क्षेममूर्ति, अपराजित, पण्डितक, विशालाक्ष, दुराधन, दृढहस्त, सुहस्त, वातवेग, सुवर्चा, आदित्यकेतु, बह्वाशी, नागदत्त, अनुयायी, कवची, निषङ्गी, दण्डी, दण्डधार, धनुर्ग्रह, उग्र, भीमरथ, वीर, वीरबाहु, अलोलुप, अभय, रौद्रकर्मा, दृढरथ, अनाधृष्य, कुण्डभेदी, विरावी, दीर्घलोचन, दीर्घबाहु, महाबाहु, व्यूढोरु, कनकांगद, कुण्डज, और चित्रक धृतराष्ट्रके, यह सौ पुत्र थे; इनके सिवाय दुःशला नाम्नी एक कन्या और युयुत्सु नामक वैश्या-गर्भसे जन्मा हुआ एक पुत्र था। ९४-१०७

धृतराष्ट्रके पुत्रोंके नाम बड़े छोटे के क्रम से कहे गये; ये सब महारथी और युद्ध में दक्ष होकर राजनीतिक और युद्धविद्या में सुपण्डित थे। हे महीपते! इनमें

सर्वे संग्रामविद्यासु विद्याभिजनशोभिनः ।
सर्वेषामनुरूपाश्च कृता दारा महीपते ॥ ११० ॥
दुःशलां समये राजन्सिन्धुराजाय कौरवः ।
जयद्रथाय प्रददौ सौबलानुमते तदा ॥ १११ ॥
धर्मस्यांशं तु राजानं विद्धि राजन्युधिष्ठिरम् ।
भीमसेनं तु वातस्य देवराजस्य चाऽर्जुनम् ॥ ११२ ॥
अश्विनोस्तु तथैवांशौ रूपेणाऽप्रतिमौ भुवि ।
नकुलः सहदेवश्च सर्वभूतमनोहरौ ॥ ११३ ॥
यस्तु वर्चा इति ख्यातः सोमपुत्रः प्रतापवान् ।
सोऽभिमन्युर्बृहत्कीर्तिरर्जुनस्य सुतोऽभवत् ॥ ११४ ॥
यस्याऽवतरणे राजन्सुरान्सोमोऽब्रवीदिदम् ।
नाऽहं दद्यां प्रियं पुत्रं मम प्राणैर्गरीयसम् ॥ ११५ ॥
समयः क्रियतामेष न शक्यमतिवर्तितुम् ।
सुरकार्यं हि नः कार्यमसुराणां क्षितौ वधः ॥ ११६ ॥
तत्र यास्यत्ययं वर्चा न च स्थास्यति वै चिरम् ।
ऐन्द्रिर्नरस्तु भविता यस्य नारायणः सखा ॥ ११७ ॥
सोऽर्जुनेत्यभिविख्यातः पाण्डोः पुत्रः प्रतापवान् ।

सबोको विवाहमे योग्य स्त्री मिली थी। हे राजन्! कौरव धृतराष्ट्रने शकुनिके मतमे सिंधुराज, जयद्रथको उचित समयमें दुःशलानाम्नी कन्या दान की थी १०८-१११

हे धरतीनाथ! धर्मके अंशसे युधिष्ठिर, पवनके अंशसे भीम, देवराजके अंशसे अर्जुन और दोनों अश्विनीकुमारोंके अंशसे अतिरूपवान सर्वभूतोंमे मनोहर सर्वप्रकारसे सुन्दर नकुल सहदेवने जन्म लिया था। वर्चा नामक प्रख्यात प्रतापी सोमके पुत्र अर्जुननन्दन महाकीर्तिमान अभिमन्युके स्वरूपमें अवतीर्ण हुए थे। हे राजन्! उनके अवतार होनेके कालमे चन्द्रने देवोंसे कहा था, कि मैं प्राणसे भी प्यारे पुत्रको भूमण्डलमें भेज नहीं सकता पृथ्वीमें असुरवधरूपी सुरकार्य हमारा अवश्यमेव कर्तव्य होगया है, इसके विरोधी कभी नहीं हो सकते, अतएव इस नियमसे वर्चाको भेजता हूं, कि वह भूतलमें अवतीर्ण होकर बहु काल नहीं रहेंगे, शीघ्र ही लौट आवेंगे। ( ११२—११७ )

नारायणके साथी नरदेव इन्द्रके वीर्यसे प्रसिद्ध पाण्डवनन्दन प्रतापी

तस्याऽयं भविता पुत्रो बालो भुवि महारथः॥ ११८ ॥
ततः षोडश वर्षाणि स्थास्यत्यमरसत्तमाः ।
अस्य षोडशवर्षस्य स सङ्ग्रामो भविष्यति ॥ ११९ ॥
यत्रांशा वः करिष्यन्ति कर्म वीरनिषूदनम् ।
नरनारायणाभ्यां तु स संग्रामो विनाकृतः ॥ १२० ॥
चक्रव्यूहं समास्थाय योधयिष्यन्ति वः सुराः
विमुखाञ्छात्रवान्सर्वान्कारयिष्यति मे सुतः॥१२१॥
बालः प्रविश्य च व्यूहमभेद्यं विचरिष्यति।
महारथानां वीराणां कदनं च करिष्यति ॥ १२२ ॥
सर्वेषामेव शत्रूणां चतुर्थांशं नयिष्यति ।
दिनार्धेन महाबाहुः प्रेतराजपुरं प्रति ॥ १२३ ॥
ततो महारथैर्वीरैः समेत्य बहुशो रणे ।
दिनक्षये महाबाहुर्मया भूयः समेष्यति ॥ १२४ ॥
एकं वंशकरं पुत्रं वीरं वै जनयिष्यति ।
प्रनष्टं भारतं वंशं स भूयो धारयिष्यति ॥ १२५ ॥
एतत्सोमवचः श्रुत्वा तथास्त्विति दिवौकसः।
प्रत्यूचुः सहिताः सर्वे ताराधिपमपूजयन् ।

अर्जुनके स्वरूपमें अवतीर्ण होंगे; हे अमरवृन्द ! मेरे पुत्र धरतीतलमें उन अर्जुनके वीर्यसे जन्म लेकर बालेपनहीमें महारथी होकरके, सोलह वर्ष रहेंगे जब इनकी सोलह वर्षकी अवस्था होगी, तब वह भारी लडाई मचेगी, जिनमें तुम्हारे अंशवाले अगणित वीरोंको गिरावेंगे । हे सुरो ! लडाईके समय शत्रु-लोग चक्राकार व्यूह रचकर लडेंगे; मेरे वह महाभुज पुत्र बालक होने पर भी नरनारायणके सिवाय औरोंके भेदनके अयोग्य उस व्यूहमें घुसकर बिना भय घूमते हुए उन सबोंको विमुखकर महारथी वीरोंको मथन करके दिनके चौथे भागके बीचमें यमराजके घरमें भेजेंगे । ११७—१२३

अनन्तर दिन बीतने पर एकत्र मिले हुए अनेक वह महारथी वीरोंसे घोर युद्ध कर मेरे महाभुज पुत्र मेरे समीप चले आवेंगे; वह एक वंशरक्षक पुत्र उत्पन्न करेंगे । वह पुत्र नष्ट होते हुए भरत-कुलका रक्षाकर होगा । सम्पूर्ण सुरोंने चन्द्रमाकी यह बात सुनकर "तथास्तु" कहके उनकी पूजा की । हे राजन् !

एवं ते कथितं राजंस्तव जन्म पितुः पितुः ॥ १२६ ॥
अग्रेर्भागं तु विद्धि त्वं धृष्टद्युम्नं महारथम्।
शिखण्डिनमथो राजन्स्त्रीपूर्वं विद्धि राक्षसम् ॥ १२७ ॥
द्रौपदेयाश्च ये पञ्च बभूवुर्भरतर्षभाः ।
विश्वान्देवगणान्विद्धि संजातान्भरतर्षभ ॥ १२८ ॥
प्रतिविन्ध्यः सुतसोमः श्रुतकीर्तिस्तथाऽपरः।
नाकुलिस्तु शतानीकः श्रुतसेनश्च वीर्यवान् ॥ १२९ ॥
शूरो नाम यदुश्रेष्ठो वासुदेवपिताऽभवत् ।
तस्य कन्या पृथा नाम रूपेणाऽसदृशी भुवि ॥ १३० ॥
पितुः स्वस्रीयपुत्राय सोऽनपत्याय वीर्यवान्।
अग्रमग्रे प्रतिज्ञाय स्वस्याऽपत्यस्य वै तदा ॥ १३१ ॥
अग्रजातेति तां कन्यां शूरोऽनुग्रहकाङ्क्षया।
अददत्कुन्तिभोजाय स तां दुहितरं तदा ॥ १३२ ॥
सु नियुक्ता पितुर्गेहे ब्राह्मणातिथिपूजने ।
उग्रं पर्यचरद्धोरं ब्राह्मणं संशितव्रतम् ॥ १३३ ॥
निगूढनिश्चयं धर्मे यं तं दुर्वाससं विदुः ।
तमुग्रं संशितात्मानं सर्वयत्नैरतोषयत् ॥ १३४ ॥

आपके पितामहकी यह जन्म-कथा कह सुनाई । ( १२४—१२६ )

महारथी धृष्टद्युम्न अग्निके अंशसे उत्पन्न हुए थे । हे राजन् ! जो शिखण्डी पहिले कन्या थे, उन्होंने राक्षसके अंशसे जन्म लिया था । हे भरतवंश श्रेष्ठ ! विश्वदेव गणने द्रौपदीके पांच पुत्र होकर जन्म लिया था; उनके नाम प्रतिविन्ध्य, सुतसोम श्रुतकीर्त्ति, शतानीक और श्रुतसेन है । यदुकुलमें श्रेष्ठ शूर वसुदेवके पिता थे; उनको पृथा नाम एक कन्या ऐसी रूपवती थी, कि उसके समान भूमण्डलमें कोई दूसरी स्त्री नहीं थी । वीर्यवान् शूरने कृपाकी आशापर अपने फुफेरे भाई कुन्तीभोजराजसे पहिले अङ्गीकार किया था, कि मेरी पहिली सन्तान होने पर तुमको दे दूंगा, इस अङ्गीकारके अनुसार पहिले गर्भसे उत्पन्न हुई उस कन्याको उनको दे दिया । ( १२७–१३२ )

पृथा पितृगृहमें ब्राह्मणोंकी सेवा और अतिथिओंके सत्कारमें लगी रहती थी। एक समय उसने जितेन्द्रिय व्रतशील अति रूखस्वभावी, धर्मके रहस्यज्ञ ब्राह्मण ऋषि दुर्वासाको सर्वप्रकारसे सेवा करके सन्तुष्ट

तुष्टोऽभिचारसंयुक्तमाचचक्षे यथाविधि ।
उवाच चैनां भगवान्प्रीतोऽस्मि सुभगे तव ॥ १३५ ॥
यं यं देवं त्वमेतेन मन्त्रेणाऽऽवाहयिष्यसि ।
तस्य तस्य प्रसादात्त्वं देवि पुत्राञ्जनिष्यसि ॥ १३६ ॥
एवमुक्ता च सा बाला तदा कौतूहलान्विता ।
कन्या सती देवमर्कमाजुहाव यशस्विनी ॥ १३७ ॥
प्रकाशकर्ता भगवांस्तस्यां गर्भं दधौ तदा ।
अजीजनत्सुतं चाऽस्यां सर्वशस्त्रभृतां वरम् ॥ १३८ ॥
सकुण्डलं सकवचं देवगर्भश्रियाऽन्वितम् ।
दिवाकरसमं दीप्त्या चारुसर्वाङ्गभूषितम् ॥ १३९ ॥
निगूहमाना जातं वै बन्धुपक्षभयात्तदा ।
उत्ससर्ज जले कुन्ती तं कुमारं यशस्विनम् ॥ १४० ॥
तमुत्सृष्टं जले गर्भं राधाभर्ता महायशाः ।
राधायाः कल्पयामास पुत्रं सोऽधिरथस्तदा ॥ १४१ ॥
चक्रतुर्नामधेयं च तस्य बालस्य तावुभौ ।
दम्पती वसुषेणेति दिक्षु सर्वासु विश्रुतम् ॥ १४२ ॥
संवर्धमानो बलवान्सर्वास्त्रेषूत्तमोऽभवत् ।

सर्वलक्षणसंपूर्णा वैदूर्यमणिसंनिभा ।
पञ्चानां पुरुषेन्द्राणां चित्तप्रमथनी रहः ॥१६०॥
सिद्धिर्धृतिश्च ये देव्यौ पञ्चाना मातरौ तु ते।
कुन्ती माद्री च जज्ञाते मतिस्तु सुबलात्मजा॥१६१॥
इति देवसुराणां ते गन्धर्वाप्सरसां तथा ।
अंशावतरणं राजन्राक्षसानां च कीर्तितम् ॥१६२॥
ये पृथिव्यां समुद्भूता राजानो युद्धदुर्मदाः।
महात्मानो यदूनां च ये जाता विपुले कुले॥१६३॥
ब्राह्मणाः क्षत्रिया वैश्या मया ते परिकीर्तिताः१६४॥
धन्यं यशस्यं पुत्रीयमायुष्यं विजयावहम् ।
इदमंशावतरणं श्रोतव्यमनसूयता ॥१६५॥
अंशावतरणं श्रुत्वा देवगन्धर्वरक्षसाम् ।
प्रभावाप्ययवित्प्राज्ञो न कृच्छ्रेष्ववसीदति॥ १६६ ॥ ( २८५२ )

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यामादिपर्वणि सम्भवपर्वण्यंशावतरणे समाप्तो सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

जनमेजय उवाच— त्वत्तः श्रुतमिदं ब्रह्मन्देवदानवरक्षसाम् ।

---

गन्धभरी पद्म समान प्रशस्त नेत्रवती सुश्रोणी सर्वलक्षणोंसे सुहासिनी वैदूर्यमणिसी और सदा सिंहरूपी पांच पुरुषोंकी चित्त मोहिनी थी। सिद्धि और धृति इन दो देवियोंने पांचों पाण्डवोंकी माता कुन्ती और माद्रीके स्वरूपमें जन्म लिया था। मति देवीने सुबलकन्या गान्धारीके स्वरूप में जन्म लिया। ( १५७— १६१ )

हे राजन्! सुर, असुर, अप्सरा, गन्धर्व राक्षसादियोंकी अंशमे अवतीर्ण होने की कथा कह चुका। जो सब ब्राह्मण, क्षत्रिय और वैश्य पृथ्वीमें जन्म लेकर युद्धमें जयके अयोग्य राजा बने थे और जिन सब महात्माओंने बडे भारी यदुकुलमें जन्म लिया था, उन सबोंकी कथाभी कह चुका; इसके पढनेसे धन, यश, पुत्र, आयु और जय मिलता है। द्वेष छोडकर यह अंशावतरण की कथा सुनना। ज्ञानीलोग देव, गन्धर्व, राक्षसोंके अंशावतरणकी कथा सुननेसे जन्म मृत्यु के वृत्तान्तमें विदित होकर विपतके समय शोकादिके वशमें नहीं होते। १६२-१६६ )

आदिपर्वमें सडसठवां अध्याय समाप्त। ( २८५३ )

आदिपर्वमें अडसठवां अध्याय।

जनमेजय बोले कि हे ब्रह्मन् ! आपसे देव, दानव राक्षस, गन्धर्व, और अप्सरो

अंशावतरणं सम्यग्गन्धर्वाप्सरसां तथा ॥ १ ॥
इमं तु भूय इच्छामि कुरूणां वंशमादितः ।
कथ्यमानं त्वया विप्र विप्रर्षिगणसंनिधौ ॥ २ ॥
वैशंपायन उवाच —पौरवाणां वंशकरो दुष्यन्तो नाम वीर्यवान् ।
पृथिव्याश्चतुरन्ताया गोप्ता भरतसत्तम ॥ ३ ॥
चतुर्भागं भुवः कृत्स्नं यो भुंक्ते मनुजेश्वरः ।
समुद्रावरणांश्चापि देशान्स समितिंजयः ॥ ४ ॥
आम्लेच्छावधिकान्सर्वान्स भुङ्क्ते रिपुमर्दनः ।
रत्नाकरसमुद्रान्तांश्चातुर्वर्ण्यजनावृतान् ॥ ५ ॥
न वर्णसंकरकरो न कृष्याकरकृज्जनः ।
न पापकृत्कश्चिदासीत्तस्मिन्राजनि शासति ॥ ६ ॥
धर्मे रतिं सेवमाना धर्मार्थावभिपेदिरे ।
तदा नरा नरव्याघ्र तस्मिञ्जनपदेश्वरे ॥ ७ ॥
नाऽऽसीच्चौरभयं तात न क्षुधाभयमण्वपि ।
नाऽऽसीद्व्याधिभयं चाऽपि तस्मिञ्जनपदेश्वरे ॥ ८ ॥
स्वधर्मे रेमिरे वर्णा दैवे कर्माणि निस्पृहाः ।

के अंशावतरण की कथा सुन चुका। हे विप्र अब इन ब्राह्मणोंके सन्मुख आप प्रथमसे कुरुवंशकी कथा कहिये, मुझे सुननेकी बडी इच्छा हो रही है। (१-२)

श्रीवैशम्पायनजी बोले, कि हे भरत-श्रेष्ठ! दुष्यन्त नामक वीर्यवान् भूप पौरवोंके आदि पुरुष थे। वह चार समुद्रान्तक धरती रखते थे और इस भूमण्डलमें जितने पदार्थ उत्पन्न होते थे उनका चौथा अंश ग्रहण करते थे। वह शत्रु मर्दनकारी रत्नसहित चातुर्वर्ण्य ब्राह्मण और क्षत्रियोंसे भरे चारों समुद्रोंसे लेके म्लेच्छदेशतक सम्पूर्ण देशोंको भोग करते थे। उनके शासनके कालमें वर्ण-संकर नहीं थे, प्रजाको खेतीकरके अनाज उपजाना नहीं पडता था और कोई पाप कर्मसे हाथ नहीं डालता था। हे नरव्याघ्र! दुष्यन्त जब नगरके स्वामी थे, तब सबलोग धर्ममें नियुक्त रहकर धर्म और अर्थ उपार्जन करते थे, चोरीका भय, रोगका भय और क्षुधाका भय कुछभी नहीं था। ३—८

उनदिनो ब्राह्मण क्षत्रिय, वैश्य, शूद्र, निज निज धर्ममें लगे रहते थे, वृष्टि आदिके निमित्त किसीको दैवकर्म नहीं

शक्रोपममभित्रघ्नं परवारणवारणम् ।
पश्यन्त्यः स्त्रीगणास्तत्र वज्रपाणिं स्म मेनिरे ॥ १० ॥
अयं स पुरुषव्याघ्रो रणे वसुपराक्रमः ।
यस्य बाहुबलं प्राप्य न भवन्त्यसुहृद्गणाः ॥ ११ ॥
इति वाचो ब्रुवन्त्यस्ताः स्त्रियः प्रेम्णा नराधिपम्।
तुष्टुवुः पुष्पवृष्टीश्च ससृजुस्तस्य मूर्धनि ॥ १२ ॥
तत्र तत्र च विप्रेन्द्रैः स्तूयमानः समन्ततः ।
निर्ययौ परमप्रीत्या वनं मृगजिघांसया ॥ १३ ॥
तं देवराजप्रतिमं मत्तवारणधूर्गतम् ।
द्विजक्षत्रियविट्शूद्रा निर्यान्तमनुजग्मिरे ॥ १४ ॥
ददृशुर्वर्धमानास्त आशीर्भिश्च जयेन च ।
सुदूरमनुजग्मुस्तं पौरजानपदास्तथा ॥ १५ ॥
न्यवर्तन्त ततः पश्चादनुज्ञाता नृपेण ह ।
सुपर्णप्रतिमेनाऽथ रथेन वसुधाधिपः ॥ १६ ॥
महीमापूरयामास घोषेण त्रिदिवं तथा ।
स गच्छन्ददृशे धीमान्नन्दनप्रतिमं वनम् ॥ १७ ॥

और अच्छी राजसभायुक्त उक्त राजाको देखने लगीं। ( ४–९ )

स्त्रियां इन्द्रके समान शत्रुनाशने हारे, अमित्र रूपी हाथियोंमें हस्तीवत उस पृथ्वीनाथ को निहार कर वज्रधारी इन्द्र समझने लगीं और यह कहकर उनका स्तव करने लगीं, कि यह पुरुषोंमें श्रेष्ठ जन रणभूमि में वसुवत पराक्रमी है, इनके भुजबलसे शत्रु लय पाते हैं। रमणीगण प्रेमसे यह कहती हुई उनके शिरपर फूल वर्षाने लगीं। दुष्यन्त सब स्थानोंमें चारों ओर ब्राह्मणोंसे प्रशंसित होकर मृगयाके लिये अति प्रसन्नचित्तसे वनको पधारे। ब्राह्मण, क्षत्रिय, वैश्य और शूद्रलोग मत्तहस्ती समान महाबली देवराजकी भांति उस पृथ्वीनाथके पीछे चले और चारों ओरसे अशीस और जयजयकार करते हुए उनको देखने लगे। ( १०–१५ )

पुरवासी और जनपदवासी इसप्रकार बडी दूरतक धरतीपति के पीछे चलकर उनकी आज्ञासे लौट आये। वह नरनाथ सुपर्णके रंगसे सजी हुई रथमण्डलीसे महीमण्डलको और रथके पहियोंकी घर घराहटसे मिले हुए कोलाहलसे आकाश मण्डलको भरने लगे। धीमान् धरतीनाथ दुष्यन्तने जाते समय बेल, खैर, मदार,

बिल्वार्कखदिराकीर्णं कपित्थधवसंकुलम् ।
विषमं पर्वतप्रस्थैरश्मभिश्च समावृतम् ॥ १८ ॥
निर्जलं निर्मनुष्यं च बहुयोजनमायतम् ।
मृगसिंहैर्वृतं घोरैरन्यैश्चापि वनेचरैः ॥ १९ ॥
तद्वनं मनुजव्याघ्रः सभृत्यबलवाहनः ।
लोडयामास दुष्यन्तः सूदयन्विविधान्मृगान् ॥ २० ॥
बाणगोचरसंप्राप्तांस्तत्र व्याघ्रगणान्बहून् ।
पातयामास दुष्यन्तो निर्बिभेद च सायकैः ॥ २१ ॥
दूरस्थान्सायकैः कांश्चिदभिनत्स नराधिपः ।
अभ्याशमागतांश्चान्यान्खड्गेन निरकृन्तत ॥ २२ ॥
कांश्चिदेणान्समाजघ्ने शक्त्या शक्तिमतां वरः ।
गदामण्डलतत्त्वज्ञश्चचाराऽमितविक्रमः ॥ २३ ॥
तोमरैरसिभिश्चापि गदामुसलकर्पणैः ।
चचार स विनिघ्नन्वै वन्यांस्तत्र मृगद्विजान् ॥ २४ ॥
राज्ञा चाऽद्भुतवीर्येण योधैश्च समरप्रियैः ।
लोड्यमाने महारण्ये तत्यजुः स्म मृगाधिपाः ॥ २५ ॥

कथा आदि नाना वृक्षोंसे घेरा हुआ, पहाडोंसे गिरे हुए पत्थरोंसे रूखा, जल और नरोंसे रहित, बहुयोजन तक फैला हुआ और मृग, सिंहों तथा दूसरे भयानक वनैले जीवोंसे भरा हुआ नन्दनवनके समान एक वन देखा। (१६–१९)

नौकर चाकर और वाहनोंसे उस वनको हिलाडुलाकर भांति भांतिके मृगोंको बेधन करने और अगणित व्याघ्रोंको लक्ष्यकर बाणोंसे बेधके धरती पर गिराया। वह दूरके मृगोंको बाणोंसे बेधने और निकटके हिरणोंको खड्गोंसे काटने लगे और उन श्रेष्ठ शक्तिवान पुरुषने किसी किसी जन्तुको शक्तिसे नष्ट किया। गदा युद्धमें दक्ष अतुल विक्रमी भूपाल तोमर, असि और गदा चलाते हुए भांति भांतिके वनैले मृग और पक्षी मारकर घूमने लगे। आश्चर्य वीर्यशाली राजा और लडाई प्यारी सेनाओंसे वह सारा वन हिलाडुल जानेसे सब सिंह उस को छोडकर भागने पर हुए। मृगदल पतिके नष्ट होनेपर शोचयुक्त हृदयसे कोलाहल करते हुए इधर उधर भागने लगे। इससे निचुडे मृग थके मांदे होकर जल पीनेके लिये सूखी नदीमें जाकर आशा और [illegible] साथ [illegible] गिरने लगे। मृगदलके

तत्र विद्रुतयूथानि हतयूथपतीनि च ।
मृगयूथान्यथौत्सुक्याच्छब्दं चक्रुस्ततस्ततः ॥ २६ ॥
शुष्काश्चापि नदीर्गत्वा जलनैराश्यकर्शिताः।
व्यायामक्लान्तहृदयाः पतन्ति स्म विचेतसः ॥ २७ ॥
क्षुत्पिपासापरीताश्च श्रान्ताश्च पतिता भुवि।
केचित्तत्र नरव्याघ्रैरभक्ष्यन्त बुभुक्षितैः ॥ २८ ॥
केचिदग्निमथोत्पाद्य संसाध्य च वनेचराः ।
भक्षयन्ति स्म मांसानि प्रकुट्य विधिवत्तदा ॥ २९ ॥
तत्र केचिद्गजा मत्ता बलिनः शस्त्रविक्षताः ।
संकोच्याऽग्रकरान्भीताः प्राद्रवन्ति स्म वेगिताः ३०
शकृन्मूत्रं सृजन्तश्च क्षरन्तः शोणितं बहु ।
वन्या गजवरास्तत्र ममृदुर्मनुजान्बहून् ॥ ३१ ॥
तद्वनं बलमेघेन शरधारेण संवृतम् ।
व्यरोचत मृगाकीर्णं राज्ञा हतमृगाधिपम् ॥ ३२ (२८०९)

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यामादिपर्वणि शकुन्तलोपाख्याने एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

वैशम्पायन उवाच— ततो मृगसहस्राणि हत्वा सबलवाहनः ।
राजा मृगप्रसङ्गेन वनमन्यद्विवेश ह ॥ १ ॥
एक एवोत्तमबलः क्षुत्पिपासाश्रमान्वितः ।

भूख प्यासके मारे थके मादे होकर धरती पर गिर जाने पर भूखी सेना आनकर उनको खाने लगी; किसी किसीने काटकर आग पैदाकरके उनके मांसको पकाकर खालिया। उस वनमें कुछ महाबली मत्तहस्ती अस्त्रों से कटे कुटे जाकर और भय खाकर सुंडके अगले भागको सिकोड करके भागने लगे; कुछ वनैले हाथी भागनेके कालमें मलमूत्र छोडते और रक्त गिराते हुए अगणित लोगोंको कुचलकर चले। मरे मृगाधिप और मृगोंसे भरे हुए उस वनमें जलरूपी बादल और बाणधारारूपी जलधारासे भरा पूरा हो कर अपूर्व शोभा धारण की। ( २०–३२ )

आदिपर्वके शकुन्तलोपाख्यानमें उन-सत्तरवां अध्याय समाप्त [ २८०९ ]

आदिपर्वमें सत्तरवां अध्याय।

श्रीवैशम्पायनजी बोले, कि राजा दुष्यन्त वाहन और सेनाओंके साथ सहस्रों मृग मारकर मृगोंको पछियाते हुये

स वनस्याऽन्तमासाद्य महच्छून्यं समासदत्॥ २ ॥
तच्चाऽप्यतीत्य नृपतिरुत्तमाश्रमसंयुतम् ।
मनःप्रह्लादजननं दृष्टिकान्तमतीव च ॥ ३ ॥
शीतमारुतसंयुक्तं जगामान्यन्महद्वनम् ।
पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलम् ॥ ४ ॥
विपुलं मधुरारावैर्नादितं विहगैस्तथा ।
पुंस्कोकिलनिनादैश्च झिल्लीकगणनादितम् ॥ ५ ॥
प्रवृद्धविटपैर्वृक्षैः सुखच्छायैः समावृतम् ।
षट्पदाघूर्णिततलं लक्ष्म्या परमया युतम् ॥ ६ ॥
नाऽपुष्पः पादपः कश्चिन्नाऽफलो नाऽपि कण्टकी ।
षट्पदैर्नाप्यवाकीर्णस्तस्मिन्वै काननेऽभवत्॥ ७ ॥
विहगैर्नादितं पुष्पैरलंकृतमतीव च ।
सर्वर्तुकुसुमैर्वृक्षैः सुखच्छायैः समावृतम् ॥ ८ ॥
मनोरमं महेष्वासो विवेश वनमुत्तमम् ।
मारुताकलितास्तत्र द्रुमाः कुसुमशालिनः ॥ ९ ॥
पुष्पवृष्टिं विचित्रां तु व्यसृजंस्ते पुनः पुनः।

अकेले दूसरे एक वनमें जाघुसे । वह अति बलवन्त होनेपर भी थकगये और भूख प्यासके मारे विकल हुए । आगे उस वनको पारकर एक बडाभारी मैदान देखा । भूपाल उस निराले मैदानको छोडकर सुन्दर आश्रमयुक्त चित्तानन्द-दायी और मनोहर दूसरे एक वनमें जा घुसे, देखा कि वहां ठण्डी हवा बह रही है, पाये खिले हुए फूलोंसे भरे हैं, और हरी घाससे धरती छिपी है, मीठी बोली बोलनेवाले पक्षियोंकी ध्वनि, कोयलोंकी कूकें और झींगुरोंकी झनकारसे वनमें शब्द हो रहा है; बडी बडी डालों वाले और ठण्डी छाहयुक्त वृक्षोंसे चारों दिशा घिरी हुई है उन पेडोंके नीचे मधुलोभी भंवरोंके गूंजते हुए घूमनेपर अति सुन्दर शोभा होरही है। (१-६)

उस वनमें फूल और फलोंसे रहित और कांटोंसे जकडा हुआ एकभी पेड न था और सबही वृक्ष भंवरोंसे भरे हुए थे। तब चापधारी दुष्यन्त पक्षियोंके कलोलोंसे पूर्ण, फूलोंसे सजेसजाये, मनोहर, सबोंसे बढिया और सबप्रकार फूलोंसे सुशोभित सुन्दरडालवाले उस वनको निहारकर उसमें जा घुसे। तब हवासे हिलते हुए फूलोंके वृक्ष बारम्बार फूलों

दिवस्पृशोऽथ संघुष्टाः पक्षिभिर्मधुरस्वनैः ॥ १० ॥
विरेजुः पादपास्तत्र विचित्रकुसुमाम्बराः ।
तेषां तत्र प्रवालेषु पुष्पभारावनामिषु ॥ ११ ॥
रुवन्ति रावान्मधुरान्षट्पदा मधुलिप्सवः ।
तत्र प्रदेशांश्च बहून्कुसुमोत्करमण्डितान् ॥ १२ ॥
लतागृहपरिक्षिप्तान्मनसः प्रीतिवर्धनान् ।
संपश्यन्सुमहातेजा बभूव मुदितस्तदा ॥ १३ ॥
परस्पराश्लिष्टशाखैः पादपैः कुसुमान्वितैः ।
अशोभत वनं तत्तु महेन्द्रध्वजसन्निभैः ॥ १४ ॥
सिद्धचारणसंघैश्च गन्धर्वाप्सरसां गणैः ।
सेवितं वनमत्यर्थं मत्तवानरकिंनरम् ॥ १५ ॥
सुखः शीतः सुगन्धी च पुष्परेणुवहोऽनिलः ।
परिक्रामन्वने वृक्षानुपैतीव रिरंसया ॥ १६ ॥
एवंगुणसमायुक्तं ददर्श स वनं नृपः ।
नदीकच्छोद्भवं कान्तमुच्छ्रितध्वजसंनिभम् ॥ १७ ॥
प्रेक्षमाणो वनं तत्तु सुप्रहृष्टविहङ्गमम् ।

से बार बार सुन्दर सुन्दर फूल बर्षाने लगे। पोधे फूलरूपी वस्त्रसे और पक्षियों की आकाशतक पहुंचती हुई मीठी बोली से सुशोभित होरहे थे। फूलोंके भारसे उन वृक्षोंके नीचे सिर किये नये-पल्लवों पर बैठकर मधुलोभी भौंरे मीठे स्वरसे गीत गारहे थे। महातेजा दुष्यन्त उस स्थानमें फूलोंसे सजे नाना प्रदेश और हृदयमें मानन्द पहुंचाते हुए लता-मण्डपोंको देखकर अति प्रसन्न हुए। एक दूसरीसे मिली हुई शाखा और फूलों से सुहावने तथा महेन्द्रकी ध्वजाके समान वृक्षोंसे वह वन सुशोभित होरहा था। वहां सिद्ध चारण, गन्धर्व, किन्नर, बन्दर, और अप्सरा बावलोंकी भांति खेल रहे थे। अनुभवमें सुखदायी, ठण्डी, फूलों की रेणु लेजानेवाली, अच्छी गन्धयुक्त हवा इधर उधर घूमती हुई मानो खेलने ही के लिये पोधोंके निकट पहुंच रही थी। ( ७ – १६ )

राजा ऐसे बहुगुणयुक्त उडती हुई ध्वजाकी नाईं, नदी तटसे उत्पन्न सुन्दर वनको देखने लगे। आगे पुण्यशीला, सुख मालिला, अगणित पक्षियोंसे घिरा हुआ और तपोवनकी मनभावनी मालिनी नदीके पास मनोहर आनन्दित पक्षियों

आश्रमप्रवरं रम्यं ददर्श च मनोरमम् ॥१८॥
नानावृक्षसमाकीर्णं संप्रज्वलितपावकम् ।
तं तदाऽप्रतिमं श्रीमानाश्रमं प्रत्यपूजयत् ॥१९॥
यतिभिर्वालखिल्यैश्च वृतं मुनिगणान्वितम् ।
अग्न्यगारैश्च बहुभिः पुष्पसंस्तरसंस्तृतम् ॥२०॥
महाकच्छैर्बृहद्भिश्च विभ्राजितमतीव च ।
मालिनीमभितो राजन्नदीं पुण्यां सुखोदकाम्॥२१॥
नैकपक्षिगणाकीर्णां तपोवनमनोरमाम् ।
तत्र व्यालमृगान्सौम्यान्पश्यन्प्रीतिमवाप स २२
तं चाऽप्रतिरथः श्रीमानाश्रमं प्रत्यपद्यत ।
देवलोकप्रतीकाशं सर्वतः सुमनोहरम् ॥२३॥
नदीं चाश्रमसंश्लिष्टां पुण्यतोयां ददर्श सः ।
सर्वप्राणभृतां तत्र जननीमिव तिष्ठिताम् ॥२४॥
सचक्रवाकपुलिनां पुष्पफेनप्रवाहिनीम् ।
सकिंनरगणावासां वानरर्क्षनिषेविताम् ॥२५॥
पुण्यस्वाध्यायसंघुष्टां पुलिनैरुपशोभिताम् ।
मत्तवारणशार्दूलभुजगेन्द्रनिषेविताम् ॥२६॥
तस्यास्तीरे भगवतः काश्यपस्य महात्मनः ।

---

से परिपूर्ण, भांति भांतिके वृक्षोंसे छपा, आहुति चढाई हुई प्रज्वलित अग्निसे सुशोभित निकटहीसे उनके नेत्रोंके सामने एक आश्रम दीख पडा। राजन्! श्रीमान् भरतीपति दुष्यन्त यति, मुनि और बालखिल्योंसे घिरा हुआ, अनेक अग्निगृहोंसे सुशोभित और फूलोंसे सुसज्जित, विस्तृत मनोहर तपोवनको देखकर बार बार उसकी प्रशंसा करने लगे और वहां के सर्पों और मृगोंकी शान्तभावको देखकर प्रसन्न हुए। ( १९-२२ )

आगे जाकर श्रीमान् दुष्यन्त देवलोकके समान सर्वप्रकारसे सुन्दर उस आश्रमकी ओर चलकर सब जीवोंकी माताके समान विराजमाना पुण्य जलपूर्ण आश्रममें सुहावनी मालिनी नदीको देखा। जो नदी किनारेकी बालभूमि और सुन्दर तथा चक्रवाकोंसे सेवा पा रही है; जिसके रेत पर चकवा चकई रहते हैं जिसकी धारमें फेनके समान फूल बहता है; जिसका तट बन्दर और भालुओंसे सुशोभित है और ...

आश्रमप्रवरं रम्यं महर्षिगणसेवितम् ॥ २७ ॥
नदीमाश्रमसंबद्धां दृष्ट्वाऽऽश्रमपदं तथा ।
चकाराऽभिप्रवेशाय मतिं स नृपतिस्तदा ॥ २८ ॥
अलंकृतं द्वीपवत्या मालिन्या रम्यतीरया ।
नरनारायणस्थानं गंगयेवोपशोभितम् ॥ २९ ॥
मत्तबर्हिणसंघुष्टं प्रविवेश महद्वनम् ।
तस्य चैत्ररथप्रख्यं समुपेत्य नरर्षभः ॥ ३० ॥
अतीवगुणसंपन्नमनिर्देश्य च वर्चसा ।
महर्षिं काश्यपं द्रष्टुमथ कण्वं तपोधनम् ॥ ३१ ॥
ध्वजिनीमश्वसंबाधां पदातिगजसंकुलाम् ।
अवस्थाप्य वनद्वारि सेनामिदमुवाच सः ॥ ३२ ॥
मुनिं विरजसं द्रष्टुं गमिष्यामि तपोधनम् ।
काश्यपं स्थीयतामत्र यावदागमनं मम ॥ ३३ ॥
तद्वनं नन्दनप्रख्यमासाद्य मनुजेश्वरः ।
क्षुत्पिपासे जहौ राजा मुदं चाऽवाप पुष्कलाम्॥३४॥
सामात्यो राजलिङ्गानि सोपनीय नराधिपः ।
पुरोहितसहायश्च जगामाऽऽश्रममुत्तमम् ॥ ३५ ॥
दिदृक्षुस्तत्र तमृषिं तपोराशिमथाऽव्ययम् ।

बडे सर्प विचर रहे हैं, उस नदीतटमें महात्मा कण्वका आश्रम विराजमान है। महर्षिओंसे बसा हुआ सुन्दर आश्रमकी पालनेवाली उस नदीको देखकर पृथ्वीनाथने उसमें प्रवेश करना चाहा। गंगाजीमें शोभायमान नरनारायण जीके आश्रमकी भांति रमणीय तट और द्वीपोंसे सुहावनी मालिनी नदीमें सजे हुए, उन्मत्त मोरके केका शब्दसे गूंजते हुए चैत्ररथ सदृश उस तपोवनमें प्रवेशकर भूपालने अति गुणशाली अपरिमित तेजोपूर्ण तपोधन कश्यपनन्दन महर्षि कण्वका दर्शन करना चाहा। तब हाथी, घोडे और पैदलोंसे परिपूर्ण सेनाको वनके द्वारपर छोडकर बोले, सेनाओ ! मैं रजोगुणके अतीत तपोधन मुनिवर कण्वके दर्शन को जाता हूं। मेरे लौटनेके काल तक तुम मेरे लिये यहां ठहरी रहो। ( २३–३३ )

अनन्तर मानवेन्द्र नन्दनवन समान उस तपोवनमें प्रवेशकर भूख-प्यासको भूलकर अपार आनन्दरूपी जलमें डूबे। वहां मन्त्री और पुरोहितके साथ सम्पूर्ण

ब्रह्मलोकप्रतीकाशमाश्रमं सोऽभिवीक्ष्य ह।
षट्पदोद्गीतसंघुष्टं नानाद्विजगणायुतम् ॥ ३६ ॥
ऋचो बह्वृचमुख्यैश्च प्रेर्यमाणाः पदक्रमैः।
शुश्राव मनुजव्याघ्रो विततेष्विह कर्मसु ॥ ३७ ॥
यज्ञविद्याङ्गविद्भिश्च यजुर्विद्भिश्च शोभितम्।
मधुरैः सामगीतैश्च ऋषिभिर्नियतव्रतैः ॥ ३८ ॥
भारुण्डसामगीताभिरथर्वशिरसोद्गतैः।
यतात्मभिः सुनियतैः शुशुभे स तदाश्रमः ॥ ३९ ॥
अथर्ववेदप्रवराः पूगयज्ञियसामगाः।
संहितामीरयन्ति स्म पदक्रमयुतां तु ते ॥ ४० ॥
शब्दसंस्कारसंयुक्तैर्ब्रुवद्भिश्चापरैर्द्विजैः।
नादितः स बभौ श्रीमान्ब्रह्मलोक इवापरः ॥ ४१ ॥
यज्ञसंस्तरविद्भिश्च क्रमशिक्षाविशारदैः।
न्यायतत्त्वात्मविज्ञानसंपन्नैर्वेदपारगैः ॥ ४२ ॥
नानावाक्यसमाहारसमवायविशारदैः।

राजचिह्न छोड कर उन अव्यग्र तपस्वी ऋषिको देखनेके लिये उस सुन्दर आश्रम में जापहुंचे। आगे उस भ्रमरोंकी गुनगुनाहट से गूंजते हुए और भांति भांतिके पक्षियों

अनुसार पवित्र यज्ञमें साम वेद गानेसे उस अथर्ववेदमें पण्डित मुनि लोग पद और क्रमयुक्त संहिताके पाठ करते थे। ३३-४०

विशेषकार्यविद्भिश्च मोक्षधर्मपरायणैः ॥ ४३ ॥
स्थापनाक्षेपसिद्धान्तपरमार्थज्ञतां गतैः ।
शब्दच्छन्दोनिरुक्तज्ञैः कालज्ञानविशारदैः ॥ ४४ ॥
द्रव्यकर्मगुणज्ञैश्च कार्यकारणवेदिभिः ।
पक्षिवानररुतज्ञैश्च व्यासग्रन्थसमाश्रितैः ॥ ४५ ॥
नानाशास्त्रेषु मुख्यैश्च शुश्राव स्वनमीरितम् ।
लोकायतिकमुख्यैश्च समन्तादनुनादितम् ॥ ४६ ॥
तत्र तत्र च विप्रेन्द्रान्नियतान्संशितव्रतान् ।
जपहोमपरान्विप्रान्ददर्श परवीरहा ॥ ४७ ॥
आसनानि विचित्राणि रुचिराणि महीपतिः ।
प्रयत्नोपहितानि स्म दृष्ट्वा विस्मयमागमत् ॥ ४८ ॥
देवतायतनानां च प्रेक्ष्य पूजां कृतां द्विजैः ।
ब्रह्मलोकस्थमात्मानं मेने स नृपसत्तमः ॥ ४९ ॥
स काश्यपतपोगुप्तमाश्रमप्रवरं शुभम् ।
नाऽतृप्यत्प्रेक्षमाणो वै तपोवनगुणैर्युतम् ॥ ५० ॥
स काश्यपस्याऽऽयतनं महाव्रतैर्वृतं समन्तादृषिभिस्तपोधनैः ।
विवेश सामात्यपुरोहितोऽरिहा विविक्तमत्यर्थमनोहरं शुभम् ॥ ५१ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यामादिपर्वणि सम्भवपर्वणि शकुन्तलोपाख्याने सप्ततितमोऽध्यायः ॥ ७० ॥

छन्द शब्द और प्राचीन शास्त्रोंका ज्ञान रखनेवाले, कालज्ञानयुक्त, द्रव्यगुणकर्मज्ञ, कार्यकारण वेत्ता, पक्षी तथा बन्दरोंकी बोली समझनेमें समर्थ विस्तीर्ण ग्रन्थ समाश्रित और नानाशास्त्रोंमें विज्ञ द्विजोंसे उचारे जाते हुए और प्रधान चार्वाकोंके चारों ओरसे बजते हुए शब्द भूपालसे सुने गये । ( ४१—४६ )

शत्रुनाशी नरेशने स्थान स्थान में ऐसे व्रतशील नियमयुक्त जपहोम करनेहारे ब्राह्मणों को देखा। महीपति दुष्यन्त ने यत्नमें बिछाये हुए विचित्र मनोहर आसनोंको देखकर चित्तमें अचरज माना और ब्राह्मणोंके बनाये हुए देवस्थानोंका संस्कार देख देख कर अपनेको ब्रह्मलोक में टिका हुआ जाना । ऋषि कण्वके तपसे रक्षित तपोगुण और वनकी शोभा युक्त उस परम मङ्गलमय आश्रमको देखनेकी लालसा न भरने पर नृपश्रेष्ठ दुष्यन्त सन्तुष्ट न होसके । शत्रुनाशी

वैशम्पायन उवाच- ततोऽगच्छन्महाबाहुरेकोऽमात्यान्विसृज्य तान् ।
नाऽपश्यच्चाऽऽश्रमे तस्मिंस्तमृषिं संशितव्रतम् ॥ १ ॥
सोऽपश्यमानस्तमृषिं शून्यं दृष्ट्वा तथाऽऽश्रमम्।
उवाच क इहेत्युच्चैर्वनं संनादयन्निव ॥ २ ॥
श्रुत्वाऽथ तस्य तं शब्दं कन्या श्रीरिव रूपिणी।
निश्चक्रामाऽऽश्रमात्तस्मात्तापसीवेषधारिणी ॥ ३ ॥
सा तं दृष्ट्वैव राजानं दुष्यन्तमसितेक्षणा ।
स्वागतं त इति क्षिप्रमुवाच प्रतिपूज्य च ॥ ४ ॥
आसनेनार्चयित्वा च पाद्येनार्घ्येण चैव हि।
पप्रच्छानामयं राजन्कुशलं च नराधिपम् ॥ ५ ॥
यथावदर्चयित्वाऽथ पृष्ट्वा चानामयं तदा ।
उवाच स्मयमानेव किं कार्यं क्रियतामिति ॥ ६ ॥
तामब्रवीत्ततो राजा कन्यां मधुरभाषिणीम्।
दृष्ट्वा चैवानवद्याङ्गीं यथावत्प्रतिपूजितः ॥ ७ ॥
आगतोऽहं महाभागमृषिं कण्वमुपासितुम्।

राजाने मन्त्री और पुरोहितोंके साथ महाव्रतशील तपोधन मुनियोंसे सर्वत्र घिरे हुए ऋषि काश्यपके उस बडे मनोहर सुन्दर स्थानमें प्रवेश किया । ४७ ५१

॥ सत्तरवां अध्याय समाप्त ॥ [illegible]

तब साक्षात् लक्ष्मीकी भांति रूपवती तपस्विनीका वेष धारण किये एक कन्या उस आश्रमसे निकल आई। उस कृष्णाक्षी नारीने राजर्षि दुष्यन्तको देखते ही उसी क्षण अभ्यर्थना करके स्वागत

विशेषकार्यविद्भिश्च मोक्षधर्मपरायणैः ॥ ४३ ॥
स्थापनाक्षेपसिद्धान्तपरमार्थज्ञतां गतैः ।
शब्दच्छन्दोनिरुक्तज्ञैः कालज्ञानविशारदैः ॥ ४४ ॥
द्रव्यकर्मगुणज्ञैश्च कार्यकारणवेदिभिः ।
पक्षिवानररुतज्ञैश्च व्यासग्रन्थसमाश्रितैः ॥ ४५ ॥
नानाशास्त्रेषु मुख्यैश्च शुश्राव स्वनमीरितम् ।
लोकायतिकमुख्यैश्च समन्तादनुनादितम् ॥ ४६ ॥
तत्र तत्र च विप्रेन्द्रान्नियतान्संशितव्रतान् ।
जपहोमपरान्विप्रान्ददर्श परवीरहा ॥ ४७ ॥
आसनानि विचित्राणि रुचिराणि महीपतिः ।
प्रयत्नोपहितानि स्म दृष्ट्वा विस्मयमागमत् ॥ ४८ ॥
देवतायतनानां च प्रेक्ष्य पूजां कृतां द्विजैः ।
ब्रह्मलोकस्थमात्मानं मेने स नृपसत्तमः ॥ ४९ ॥
स काश्यपतपोगुप्तमाश्रमप्रवरं शुभम् ।
नाऽतृप्यत्प्रेक्षमाणो वै तपोवनगुणैर्युतम् ॥ ५० ॥
स काश्यपस्याऽऽयतनं महाव्रतैर्वृतं समन्तादृषिभिस्तपोधनैः ।
विवेश सामात्यपुरोहितोऽरिहा विविक्तमत्यर्थमनोहरं शुभम् ॥ ५१ ॥

इति श्रीमहाभारते शतसाहस्त्र्यां संहितायां वैयासिक्यामादिपर्वणि सम्भवपर्वणि शकुन्तलोपाख्याने सप्ततितमोऽध्यायः ॥ ७० ॥

छन्द शब्द और प्राचीन शास्त्रोंका ज्ञान रखनेवाले, कालज्ञानयुक्त, द्रव्यगुणकर्मज्ञ, कार्यकारण वेत्ता, पक्षी तथा बन्दरोंकी बोली समझनेमें समर्थ विस्तीर्ण ग्रन्थ समाश्रित और नानाशास्त्रोंमें विज्ञ द्विजोंसे उचारे जाते हुए और प्रधान चार्वाकोंके चारों ओरसे बजते हुए शब्द भूपालने सुने गये । ( ४१—४६ )

शत्रुनाशी नरेशने स्थान स्थान में ऐसे व्रतशील नियमयुक्त जपहोम करनेहारे ब्राह्मणों को देखा। महीपाति दुष्यन्त ने यत्नसे बिछाये हुए विचित्र मनोहर आसनोंको देखकर चित्तमें अचरज माना और ब्राह्मणोंके बनाये हुए देवस्थानोंका संस्कार देख देख कर अपनेको ब्रह्मलोकमें टिका हुआ जाना । ऋषि कण्वके तपसे रक्षित तपोगुण और वनकी शोभा युक्त उस परम मङ्गलमय आश्रमको देखनेकी लालसा न लगने पर नृपश्रेष्ठ दुष्यन्त सन्तुष्ट न होसके । शत्रुनाशी

